THE

# Sabdikadarsa Series

## ॥ नागेशाशयनिर्णयः ॥

# Nagesasaya Nirnaya

No. 2 Part I.

BY

MEDHASRI PANDITA KAVISEKHARA

[illegible]

OF RADHAMANGALAM

*Senior Professor of Vyakarana, Sanskrit College, Trivadi*

SRIRANGAM

SRI VANI VILAS PRESS

1913



[Price As 6 Postage extra

# NOTICE.

# Nagesasaya Nirnaya.

It is with great pleasure that we announce the publication of a new work on Vyakarana called **NAGESASAYA NIRNAYA** by Medhasri Pandit Kavisekhara Pandit R. Narayana Sastrigal, Senior Professor of Vyakarana, Sanskrit College, Tiruvadi It goes without saying that Vyakarana is the most important and the most popular of all the Vedangas and among the various works on Vyakarana the Paribhashendusekhara of Nagoji Bhatta takes a foremost place There are several commentaries on the Paribhashendusekhara but all of them are more or less adverse criticisms of the text Hence a learned and at the same time an appreciative commentary on this great work was, up to now, an essential desideratum To supply this real want is the object of this venture. That Pandit R Narayana Sastrigal is eminently fitted for the task he has undertaken is amply testified to by Mahamahopadhyaya Pandit Subbarayachariar and others who, as is well known, are thoroughly competent to pronounce an opinion on the subject This commentary is intended not only to expound faithfully the beliefs of Nagesa Bhatta as explained in his Paribhashendusekhara but also to critically examine the various interpretations given by different other commentators A perusal of the specimen pages will surely convince all readers of the usefulness of this commentary. To keep it within the reach of all it is resolved to issue it in monthly parts of not less than 32 pages Royal Octavo for **ANNAS 6** only per part. (As. 8 per V. P P.). As only a limited number of copies are printed, intending subscribers should apply at once to the undesigned.

THE MANAGER,

NAGESASAYA NIRNAYA,

Sri Vani Vilas Press.

**Srirangam,** Madras Presidency, India

THE

# Sabdikadarsa Series

## ॥ नागेशाशयनिर्णयः ॥

# Nagesasaya Nirnaya



No. 1. Part I.


BY

MEDHASRI PANDITA KAVISEKHARA

Pandit NARAYANA SASTRIGAL

OF RADHAMANGALAM,

*Senior Lecturer of Vyakarana, Sanskrit College, Trivadi*





SRIRANGAM

SRI VANI VILAS PRESS

1913




[Price **As. 6.** Postage extra

# NOTICE.

It is with great pleasure that we announce the publication of a new work on Vyakarana called **NAGESASAYA NIRNAYA** by Medhasri Pandit Kavisekhara Pandit R. Narayana Sastrigal, Senior Professor of Vyakarana, Sanskrit College, Tiruvadi. It goes without saying that Vyakarana is the most important and the most popular of all the Vedangas and among the various works on Vyakarana the Paribhashendusekhara of Nagoji Bhatta takes a foremost place There are several commentaries on the Paribhashendusekhara but all of them are more or less adverse criticisms of the text Hence a learned and at the same time an appreciative commentary on this great work was, up to now an essential desideratum To supply this real want is the object of this venture That Pandit R. Narayana Sastrigal is eminently fitted for the task he has undertaken is amply testified to by Mahamahopadhyaya Pandit Subbarayachariar and others who, as is well known, are thoroughly competent to pronounce an opinion on the subject This commentary is intended not only to expound faithfully the beliefs of Nagesa Bhatta as explained in his Paribhashendusekhara but also to critically examine the various interpretations given by different other commentators A perusal of this part will surely convince all readers of the usefulness of this commentary. To keep it within the reach of all it is resolved to issue it in monthly parts of not less than 32 pages Royal Octavo for **ANNAS 6** only per part (As. 8 per V P P.) As only a limited number of copies are printed, intending subscribers should apply at once to:

THE MANAGER,

NAGESASAYA NIRNAYA,

Sri Vani Vilas Press,

***Srirangam.*** Madras Presidency, India

शाब्दिकादर्शे प्रथमो बिम्बः ॥

॥ श्रीः ॥

# ॥ नागेशाशयनिर्णयः ॥

पदवाक्यप्रमाणपारावारपारीणपञ्चनदपरिसरविराजमानपुदग्रहारग्रामाभि-
जननवसालनगरीराजस्थानधर्माधिकारि, विविधग्रन्थनिर्माणचातुरीधुरीण
श्रीगोपालपण्डितप्रकाण्डपादारविन्दसेवासमुद्दलितपदवाक्यविलास-
समुन्मेषेण वाग्वादिनीवीक्षणविलासव्यवस्थितसरसकविता-
साम्राज्यसार्वभौमेन, वासुदेवकरुणावतारप्रथमतीर्थेन
मद्रमहीशमाश्रिमणि वी. कृष्णस्वाम्यार्यमहाशय-
विभुराजसंकल्पितसञ्जीविकेन, पञ्चनदस्थराजकीय
संस्कृतमहाकलाशालाव्याकरणप्रधानाध्यापकेन
चोलमण्डलमण्डलायमानराधामङ्गलग्रामाभिजनेन
वासुदेवोपनामकेन 'मेधाश्रीपण्डितकविशेखर' बिरुदभूषितेन
'नारायणशास्त्रिणा'
प्रणीतः ।



श्रीरङ्गस्य
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितः ।
१९१३.

॥ श्रीः ॥

# ॥ विज्ञापनम् ॥

---

अनुगृह्णन्तु सुमनसः सादरमस्मदीयविज्ञापनाकर्णनावधानदानविहरणेन। यत्पुनरिदं विदितमेव तत्र भवद्भ्यः विशिष्योपकारकं वेदाङ्गेषु व्याकरणम्, तत्रापि प्रधानं पाणिनीयमिति। गच्छता च कालेन प्रबन्धेष्वनेकेष्ववतीर्णेषु पाणिनीयसिद्धान्तप्रतिपादनप्रवणेषु समुल्लसितं सिद्धान्तपद्धतिपरिशीलनेन, संकुलं स्वारसिकयुक्तिमुक्ताकलापेन, समुज्ज्वलं स्वयमुल्लेखसहस्रेण, निबिडितं नवनवशङ्कासमाधानसंदोहेन, निरन्तरं नैयायिकरीतिवितानेन, महनीयं महाभाष्यमर्मयोजनेन, कञ्चुकितं कैयटभाववर्णनेन, तुन्दिलं तत्तदर्थपरिष्कारनिष्कर्षेण, परिशुद्धं प्राचीनमतपेषणेन, विशेषितं विषयविशेषविवेचनेन, रसनीयं रहस्यार्थप्रकाशनेन, रञ्जितं व्यञ्जनया, अतिशयितमाशयेन, सङ्क्षिप्तमक्षरेण, सुप्रसिद्धं इतो मार्क्ं वर्षद्विशत्यामुत्पन्नेन, अखिलेष्वपि तन्त्रेषु अप्रतिबद्धप्रसरमसाधारणमामूलचतुरमन्यादृशमासादितेन निर्वर्णनीयं नैपुणम्, फणिपतिफणितिपयःपयोनिधिं प्रकर्षेण प्रतिभापर्यायेण मथ्नता निर्विकल्पकल्पनाशिल्पेन निरतिशयमहिममहितेन महामहोपाध्यायबिरुदभूषितेन **नागेशभट्टाचार्येण** सर्वेषामपि स्वोपज्ञानां सुदृढविषयविचारचारुतरविलसितानां स्मृतिपथाधिरोहणसौकर्याय परिभाषेन्दुशेखरादिकं प्रणीय प्रबन्धरत्नं बहूपकृतं पण्डितमण्डलस्येति न खलु विशिष्य विज्ञापनीयमभिज्ञसार्वभौमेषु। तत्र च परिभाषेन्दुशेखरः परं सन्दर्भानुगुणं तत्तत्परिभाषासंयोजनेन संमोदमादधाति सुमेधसाम्। तस्मिंश्च व्याख्यातेऽपि पण्डितप्रकाण्डैरनेकैरसाधारणमेधामहितैः, न ते विषयविमर्शसरणौ, कोटिक्रमाटीकने, प्रमाणोपष्टम्भप्रकाशने, दुरूहोल्लेखशिक्षणे, दुर्वादिमुखमुद्रणे, क्रमाधिगतवादकोलाहले चेशत इति। अनादृतोपाध्यायसूक्तिसंभूषितसंप्रदायं, अनभिज्ञातरासिक्यवैभवं, अनाकलितवाक्यार्थविचारं, अवधूतमहाभाष्यार्थमर्मविवेचनं, अपगतनवीनसंप्रदायं, दुरा-

ग्रहदूषणकलुषितं, दन्तुरयति चिन्तासहस्रैरान्तरं व्याख्यानमखिलं तदीयं वैयाकरणशिखामणीनाम् । अतश्च अविभिन्ननवीनसमयसेतुकं, नागेशभट्टोपाध्यायनिबन्धनिचयमर्मनिर्मोचनचणमधिगतभूषणप्रस्थानं, अपाकृतान्तरालिककलहं, विद्रारितविमतमतभेदं, परिशीलितपदार्थविवेचनं, प्रसन्नरमणीयं, परिभाषेन्दुशेखरार्थप्रकाशनचणं, नागेशाशयनिर्णयाभिधानं नारायणशास्त्रिणा मेधाश्रीपण्डितकविशेखरबिरुदभूषितेन पञ्चनदस्थराजकीयसंस्कृतमहापाठशालाव्याकरणप्रधानाध्यापकेन निर्मितं निबन्धरत्नमासाद्य असाधारणमस्य समुत्कर्षं सुदृढमाकलय्य तन्मुद्रणे प्ररूढः परितोषो वरीयानुद्यमश्च । अतिमहद्वेदमन्तरा ग्राहकजनानुग्रहं न चिरेणापि निर्वोढुं पार्यते । अतश्च सौकर्यमेकमेव ग्राहकमहाशयानां समालोच्य एकैकस्याः सञ्चिकाया आणकषट्कं परिकल्प्य मूल्यं महामहिम्नां प्रसादः परमाशास्यते ॥

॥ श्रीः ॥

# ॥ नागेशाशयनिर्णयः ॥



प्रपन्नार्तिपरीहारकलापारीणवीक्षणम् ।
विशिष्टजनसर्वस्वं वासुदेवमुपास्महे ॥ १ ॥

कुलगिरिराजकुमारीकुचभरपरिरम्भसंभ्रमारम्भम् ।
कैरविणीविटमकुटं कण्ठेकालं भजामहे कमपि ॥ २ ॥

व्याकरणतन्त्रमूलं मुनित्रयं नौमि पाणिनिप्रमुखम् ।
अस्य समष्टिमपीडे गोपालाख्यं गुणाढ्यमाचार्यम् ॥ ३ ॥

गोपालसूरीन्द्रगुरूद्वहानां
पादारविन्दद्वयमाश्रयामि ।
नागेशभट्टाशयवर्णनेषु
यत्सूक्तिरेका जगति प्रशस्ता ॥ ४ ॥

गोपालपण्डिताधीशप्रसादप्राप्तसन्मतिः ।
नारायणकविर्ब्रूते नागेशाशयनिर्णयम् ॥ ५ ॥

श्रीमान्कृष्णस्वामिनामा द्विजन्मा श्रेयस्तोमप्राप्तिसंरूढकीर्तिः ।
येनैवाभूत्कल्पिता जीविका मे कर्मण्यस्मिन् मां न्ययुङ्क्त प्रभुः सः ॥

तदहं तदीयवचसः स्मरन्सुमेधःसहस्रसंसेव्याम् ।
पदवीं प्रयातुकामः साहाय्यं तत्र सुमनसः कुरुत ॥ ७ ॥

पण्डितेन्द्रैः प्रसीदद्भिः परिभाषेन्दुशेखरे ।
निष्कृष्टोऽर्थो गृहीतव्यो नागेशाशयनिर्णयात् ॥ ८ ॥

# नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
# बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

---

नागेशवाङ्निकरवारिधिपारवीक्षा-
संपादनप्रवणसद्व्यवसायशीलः ।
गोपालदेशिकदृगञ्चलकर्णधारः
साहाय्यमाकलयतां मम सर्वदापि ॥ ९ ॥

अवधीरणामहर्निशमाविष्कुर्वन्नरटत्वसाधुजनः ।
गृह्णन्तो गुणमेव प्रसिद्धयशसोऽपि सन्ति खलु सन्तः ॥ १० ॥

मूलग्रन्थे दूषणं दातुकामाः
व्याकुर्वन्तु स्वेच्छया पण्डितेन्द्राः ।
व्यावृण्वानो ग्रन्थकाराभिसंधि
दोषोद्धारे सर्वथा कश्चिदीष्टे ॥ ११ ॥

नागेशगूढाशयवर्णनेषु
व्याख्यातृभिः कैरपि न प्रविष्टम् ।
आचार्यवर्यानुगृहीतमेव
पन्थानमाश्रित्य विवेचयामः ॥ १२ ॥

परमेश्वरप्रसादलब्धचतुर्दशसूत्रीमूलकत्वाच्छब्दशास्त्रस्य तत्तत्वावगतेश्च तत्प्रसादैकसमधिगम्यत्वेन तदनुग्रहसंपादनलम्पटं तत्प्रणामात्मकं मङ्गलमाचार्यान्ध्यतॄणामनुषङ्गतो मङ्गलाय च तदुपनिबध्नंश्चिकीर्षितं प्रतिजानीते— **नत्वेत्यादिना** ॥ स्वापकर्षबोधानुकूलो व्यापारो नतिः । तादृशापकर्षबोधे अपकर्षावधित्वेन विषयत्वाद्ब्रह्मणः कर्मत्वम् । 'सन्तोषातिशयकाले प्रार्थना झटिति स्वाभीष्टघटनापटीयसी' इति न्यायाश्रयणेन साम्बत्वेन शिवो विशेषितः । साम्बम्, शिवम्, ब्रह्म, इति पदत्रयमुपादीयमानं अम्बयति जगदुत्पादयतीति व्युत्पत्त्या सर्वजगत्स्रष्टृत्वस्य, ब्रह्मयति जगद्वर्धयतीति व्युत्पत्त्या सर्वजगत्पालकत्वस्य, शेते जगद्यस्मिन्निति व्युत्पत्त्या सर्वजगल्लयाधिकरणत्वस्य च बोध-

नात्सृष्टिस्थितिसंहारकर्तृत्वेन जगज्जन्मादिकारणं 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिप्रतिपादितं परं ब्रह्म प्रतिपादयति। 'साम्बं शिवम्' इति पदद्वयमुपाददानेन सतीदेवीसमेतस्यापि पितुः शिवभट्टस्य प्रणामकर्मतावगम्यते अभिप्रेतेति। नागेश इति। नागानामीशो नागेश इति द्वितीयान्तम् 'अहरहर्नयमानो गामश्वं पुरुषं पशुम्' इत्यत्रेव अत्रापि विनापि चं समुच्चयः स्वीक्रियते। व्याकरणशास्त्रप्रणेतृत्वेन प्रसिद्धान् पतञ्जलींश्च नत्वेति केचित्, तदापाततः। 'नागेशभट्टो नागेशभाषितार्थविचक्षण.' 'नत्वा फणीशं नागेश' इत्याद्युद्योतशेखरादिषु स्वनामग्रहणाचारेण प्रकृतेऽपि तथैव वक्तुमौचित्यात्। न हि निषेधो विषयीकरोति 'आत्मनाम—' इति स्वनामग्रहणम्। उच्चारणरूपमेवोच्यते ग्रहणं तत्र ग्रहधातुनेति स्वनामोच्चारणमेव प्रतिषेद्धुं प्रयतमानो निषेधः कथं वा विषयीकरोतु प्रकृते लेखनम्। न हि लेखनेऽपि मानसमुच्चारणं नान्तरीयकम् इति प्रतिषेधः शक्यते प्रवर्तयितुम्। विप्रतिषिद्धं खल्वेतत्। यदुच्चारणं ताल्वोष्ठपुटव्यापाररूपं तन्मानसमिति। यदितराग्राह्यं बौद्धसत्तासमाविष्टं तदेव चाङ्गीकुर्मो मानसमिति कथं वा निवारयामः प्रकृते निषेधम्। नागः पतञ्जलिः ईशः प्रवर्तको यस्येत्यन्तर्यामितया साक्षात्पतञ्जलिनैवायं ग्रन्थः क्रियते न मया इत्यहंकारनिवृत्त्यर्थं यौगिकत्वाश्रयणेन योगजशक्तिमत्तया व्यावहारिकत्वेन 'आत्मनाम—' इति वचनबोधितस्य निषेधस्य प्रवृत्तियोग्यतामनवेक्षमाणाः 'नामान्तरसत्वे प्रमाणाभावाच्चिन्त्यमिदम्' इति वदतो विश्वनाथभट्टस्य वदनकुहरं 'नागोजिभट्टः' इति नामान्तरोपलम्भेन पिधातुं प्रभवामः। एकादशेऽहनि पितृकृतनाम्नो गुप्तत्वेन अभिवादनीयत्वेन च तेनाव्यवहार इत्येव समीचीनः पन्थाः। यदि पुनरिदमेव साक्षादुच्यते नाग ईशः प्रवर्तको यस्येति व्युत्पत्त्याश्रयणे जातिप्रवृत्तिनिमित्तकद्रव्यविशेषवाचकनागशब्दसमभिव्याहृतस्य ईशशब्दस्य पूर्वनिपातापत्तिरिति तं प्रतिब्रुवीत नेदं वाक्यार्थचन्द्रिकोक्तं क्षोदक्षमम्। यतो 'विशेषणं विशेष्येण बहुलं' इति सूत्रे विशेषणविशेष्यपदद्वयमुपादत्ते पाणिनिः, तत एवं विज्ञायते कर्मधारयविषये जातिप्रवृत्तिनिमित्तकस्यैव तद्भिन्नप्रवृत्तिनिमित्तकशब्दसमभिव्याहारे विशेष्यत्वमित्येव नियम इति। अतश्च 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र उभयमनुपलभमाना बहुव्रीहिविषये तादृशस्योत्पश्यामोऽभावं नियमस्येति

जातिप्रवृत्तिनिमित्तकनागशब्दस्यैव विवक्ष्यते विशेषणता । अतो नागेश इत्यत्र न नागपदे 'सप्तमीविशेषणे बहुव्रीहौ' इति पूर्वनिपातप्रवृत्तिः शक्यते प्रतिहन्तुम् । अत एव 'जानकीजानिः' इत्यादि सिध्यति । अन्यथा जानकीजानिरित्यादौ 'गोत्रं च चरणैः सह' इति जातिकार्यातिदेशाज्जायाशब्दस्य जातिभिन्नप्रवृत्तिनिमित्तकत्वेन तद्विशेषणत्वात्पूर्वनिपातापत्तिर्दुर्वारा । यदि च जानकीशब्दो नैयायिकाभिमतजातिभिन्नप्रवृत्तिनिमित्तक एवेत्युच्येत, तर्हि स वक्तव्यो भुजगशयनः, कमलासनः, नरवाहनः, स्त्रीप्रमाण इत्यादौ पूर्वनिपातमापाद्यमानमपवारयितुमन्विष्यतामुपायान्तरमिति । न हि पीताम्बर इत्याद्यसिद्धिः । 'कृत्तद्धितसमासास्त्वभिधानलक्षणाः' इति भाष्यमेव प्रमाणीकुर्वन्तः पीतशब्दस्योत्तरपदार्थभूताम्बरपदार्थनिष्ठविशेष्यतानिरूपितस्य व्यावर्तकत्वरूपविशेषणत्वस्य विवक्षया पीतशब्दस्यैवाभ्युपगच्छाम. पूर्वनिपातम् । अनुकूलश्चास्माकं 'उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणम्' इति 'सप्तमीविशेषणे बहुव्रीहौ' इति सूत्रस्थ· समासशेखरः । किं च नील इति सामान्योपक्रमे उत्पलस्यापि व्यावर्तकत्वरूपं विशेषणत्वमस्तीति तस्याव्यावर्तकतया 'विशेषणं विशेष्येण बहुलम्' इति सूत्रे विषयताविशेषरूपविशेषणत्वस्य ग्रहणेऽपि 'सप्तमीविशेषणे बहुव्रीहौ' इत्यत्र व्यावर्तकत्वरूपस्यैव विशेषणत्वस्य ग्रहणेन नागेश इत्यत्र ईशत्वस्य विधेयत्वेन पूर्वमज्ञातत्वाद्व्यावर्तकत्वाभावेन विशेषणत्वाभावाच्च ईशशब्दे 'सप्तमीविशेषणे—' इति पूर्वनिपातस्य प्रसक्तिरिति तमापादयन् वाक्यार्थचन्द्रिकाकारः स्थूलदृश्वेति स्पष्टं सुमेधसाम् । मानसोच्चारणस्य श्रेयोविरोधित्वाभावेन श्रेयोविरोधिन एवोच्चारणस्य परस्य स्वनामप्रतिपत्तिजनकस्य निषेध. श्रेयस्कामो न गृह्णीयादिति वाक्यशेषेणावगम्यत इति लेखने निषेधस्य न प्रसक्तिरित्येव युक्तः पन्थाः ॥

कुरुत इति । अनायासबोधजन्यसुकृतस्य तज्जन्ययशसो वा आत्मगामित्वेऽपि सुखबोधरूपफलोद्देशेनैव ग्रन्थकरणप्रवृत्तेः 'बालानां सुखबोधाय' इत्यनेन बोधनात्सुखबोधरूपफलस्य च परगामितया 'ऋत्विजो यजन्ति' 'देवदत्तः पचति' इत्यादाविव स्वान्यविषयकेच्छानधीनेच्छाविषयत्वरूपक्रियाजन्यमुख्यफलत्वाभावेन 'स्वरितञितः—' इति सूत्रेणात्मनेपदाप्राप्तावपि 'गन्धनावक्षेपण—' इति सूत्रेण प्रकथने आत्मनेपदसिद्धिः । प्रकथनं च प्रकाशनं

व्याख्यानमिति यावत् । ‘यजमानो यजते’ इत्यादौ दक्षिणारूपफलस्य परगामित्वेऽपि मुख्ययजनजन्यफलस्य स्वर्गरूपस्य यजमाननिष्ठत्वेन आत्मनेपदम् । तथा सुखबोधरूपपरोपकृतिजन्यस्वर्गरूपस्य फलस्य यशोरूपफलस्य वा आत्मगामित्वादात्मनेपदम्’ इति यागेश्वराद्युक्तं न युक्तम् । ‘लोकतो वेदतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तदेव न दक्षिणादिरूपम्, तत्र पच्यादौ भोजनादि लोकतोऽवगतम्, यज्यादौ स्वर्गादि श्रुत्या अवगतम्’ इति ‘स्वरितञितः—’ इति सूत्रस्थतिङन्तशेखरपर्यालोचनया ‘यजमानो यजते’ इत्यादावात्मनेपदस्य ‘ऋत्विजो यजन्ति’ इत्यादौ परस्मैपदस्य च सिद्धौ प्रकृते बालानामनायासबोधरूपफलोद्देशेनैव व्याख्यानप्रवृत्तेर्लोकतोऽवगमेन सुखबोधस्य च बालनिष्ठत्वेन कर्तृगामित्वाभावात् आत्मनेपदप्रतिपादनस्य व्याहतत्वात् । ‘सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्’ इत्यादौ तु व्याख्यापदसमभिव्याहारेण ‘स कीचकैर्मारुतपूर्णरन्ध्रैः’ इत्यादाविव ‘विशिष्टवाचकानां पदानां सति विशेषणान्तरसमवधाने विशेष्यमात्रपरत्वम्’ इति न्यायेन कृञ्धातोरुत्पादनमेव तत्रार्थ इति नात्मनेपदप्रसक्तिं पश्यामः । न हि ‘नाविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् । भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति’ इत्युद्योतारंभश्लोके न प्रसज्यत एवात्मनेपदम् । यतो व्याख्यानपदसमभिव्याहारेण तत्र कृञ्धातोः न प्रकथनमर्थः । ‘गन्धनावक्षेपण—’ इति सूत्रेण उपयोगे आत्मनेपदविधानेन तत्सिद्धेः । उपयोगश्च ‘धर्मादिप्रयोजनो विनियोगः’ इति स्पष्ट वृत्त्यादौ । नचैवं ‘कुर्मः प्रौढमनोरमां’ इत्यत्राप्युपयोगे तङस्त्विति शङ्क्यम्, उद्योतारंभे ‘मध्यानामपि बोधकृत्’ इत्युक्तेः बोधजननप्रयोजनविनियोगरूपस्य उपयोगस्य लाभेनात्मनेपदसिद्धौ ‘कुर्मः प्रौढमनोरमां’ इत्यादावुपयोगलाभप्रकारानुपलंभेन तदापादनं भवति दूरापास्तमेव । एतेन ‘यशसः शिष्याणामनायासज्ञानजन्यसुकृतस्य च आत्मगामित्वादात्मनेपदम्’ इति सर्वमकुलाद्युक्तमनादरणीयमेव । तद्रीत्या यशःस्वर्गलाभाद्युद्देशेन ग्रन्थकरणप्रवृत्तेर्यशोरूपादिफलस्य चात्मगामित्वेन ‘कुर्मः प्रौढमनोरमाम्’ इत्यादावात्मनेपदस्य दुर्वारत्वात् ॥ सुधीरिति ॥ विद्वान् कल्पक इत्यर्थः । सदसद्विवेचनैकधुरीण इति फलितम् । ‘वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च’ इति स्मरणात् ‘अद्य रामस्य राम-

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापक-

---

त्वं पश्यन्तु हरियूथपाः' इत्यादिकमनुसन्दधानः स्वस्य ऊहापोहादिकौशलेन प्रशस्तबुद्धिमत्वादनितरसाधारणमनेन प्रौढप्रबन्धनिर्माणचातुर्यं सूचयति । सीरदेवप्रणीतपरिभाषावृत्तेः परिभाषार्थनिर्णयो न संभवत्येवेति निर्णयेनाह— **बालानामिति** । बालत्वं चात्र लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिविधिशास्त्रीयबोधप्रयोजकपरिभाषानिष्कृष्टार्थजिज्ञासुत्वम् ॥ **सुखबोधायेति** ॥ सुखमनायासः, प्रयोजकत्वं चतुर्थ्यर्थः ॥ **परिभाषेन्दुशेखरमिति** ॥ परिभाषामधिकृत्य कृतो ग्रन्थः परिभाषा । 'लुबाख्यायिकाभ्य' इति बहुवचननिर्देशेन आख्यायिकासदृशेभ्योपि तद्भिन्नेभ्यो लुप्सिध्यति । परिभाषा इन्दुशेखर इवेत्युपमितसमासः । सादृश्यमभीष्टार्थप्रकाशकत्वेन । यद्वा परिभाषैव इन्दुः परिभाषेन्दुः मयूरव्यंसकादित्वात्समासः स शेखरो यस्येति व्युत्पत्या प्रसिद्धचन्द्रशेखरापेक्षया विलक्षणोऽयं ग्रन्थश्चन्द्रशेखरः तत्कार्यकारित्वात् । तथा च विधिशास्त्रीयबोधप्रयोजकपरिभाषार्थनिष्कर्षप्रतिपादकग्रन्थविशेषमिति फलितम् । लौकिकवैदिकव्यवहारसाधुत्वासाधुत्वनिर्वहणधुरीणस्य सूत्रात्मकस्याष्टकस्यास्य पाणिनिप्रणीतस्य कृत्स्नस्य व्याकरणशास्त्रस्य परिभाषार्थनिष्कर्षानुदये लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधानुदय इति परिभाषानिष्कृष्टार्थज्ञानमावश्यकमेवेति सूचितम् । ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकज्ञानविषयत्वरूपानुबन्धचतुष्टयमुत्तरार्द्धेन सूचितम् । परिभाषैकवाक्यतापन्नविधिवाक्यार्थबोधजन्यसाधुत्वज्ञानं प्रयोजनम् । परिभाषावाक्यार्थो विषयः । बालोऽधिकारीत्याद्यनुसन्धेयम् ॥

अथ किमिदं परिभाषात्वम् । न तावत्सङ्केतग्राहकभिन्नत्वे सति विध्यपेक्षितार्थसमर्पकत्वम्, अधिकारादावतिव्याप्तेः । नाप्यनियमे नियमकारित्वम्, अव्याख्याताष्टाध्यायीपठितपरिभाषास्वतिव्याप्तेः । न वा लिङ्गवत्वे सति सन्दिग्धार्थनिर्णायकत्वम्, अन्नत्यवाचनिकीष्वव्याप्तेः । अष्टाध्यायीपठितपरिभाषास्वतिव्याप्तेश्चेत्यतः परिभाषास्वरूपमन्यादृशं निरूपयति— **प्राचीनेत्यादिना** ॥ प्राचीनवैयाकरणानामिन्द्रादीनाम् । **तन्त्रे**—शास्त्र इत्यर्थः ॥ **वाचनिकानीति** ॥ वचनमेव प्रयोजनं कारणं येषामिति वाचनिकानि 'प्रयोजनम्'

**न्यायसिद्धानि भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ॥**

---

इति ठञ् । वचनेनैव वाचैव साधितानीत्यर्थः ॥ **ज्ञापकन्यायसिद्धानीति** ॥ ज्ञापकं चैतच्छास्त्रीयं लिङ्गम् । तच्चान्यथानुपपत्त्या कल्प्यमानस्य कस्य चिदंशस्य साधकम् । अन्यथानुपपत्तिश्च आनर्थक्येनास्कन्दितस्यैव । एवं च वैयर्थ्येनैव ज्ञापनम् । यत्र वैयर्थ्यं तत्र स्वांशे चारितार्थ्यमुपपादनीयम् । यत्रानौचित्यं तत्र स्वांशे औचित्यमप्युपपादनीयम् । एवमन्यत्र फलदर्शनमपि । न्यायश्च एतच्छास्त्रलोकतन्त्रान्तरप्रसिद्धयुक्तिः । न्यायस्य लौकिकत्वेन तदपेक्षया शास्त्रीयत्वेन शास्त्रस्य च ऋषिप्रणीतत्वेन स्मृतित्वात्स्मृत्यनुगृहीतत्वेन ज्ञापकसिद्धस्याभ्यर्हितत्वात् ज्ञापकशब्दस्य द्वन्द्वे पूर्वनिपातः । ज्ञापकसहितो न्यायः इत्यपि समासः । तेन ज्ञापकसिद्धानि, न्यायसिद्धानि चेति लब्धम् । ज्ञापकं च द्विविधम् । सूत्रस्थं भाष्यस्थं चेति । तेन भाष्यध्वनितपरिभाषाणाम् 'कार्यमनुभवन्—' इत्यादीनां भाष्यस्थज्ञापकसिद्धत्वान्निरूपणमुपपद्यते । सूत्रस्थज्ञापकसिद्धानि 'नानुबन्धकृतमनेकाल्त्वम्' इत्यादीनि । भाष्यस्थज्ञापकसिद्धानि 'लुग्विकरणालुग्विकरणयोः—' इत्यादीनि । न्यायसिद्धानि 'सन्निपातलक्षणो विधिरनिमित्तम्—' 'यथोद्देशम्—' इत्यादीनि । उभयसिद्धानि 'अनेकान्ताः' 'एकान्ताः' इत्यादीनि ॥ **भाष्यवार्तिकयोरुपनिबद्धानीति** ॥ भाष्यवार्तिकयोः वचनरूपेण पठितानीत्यर्थः । ज्ञापकन्यायौ विना ताभ्यां प्रतिपादितानीति यावत् । तेन भाष्योपनिबद्धानि वार्तिकोपनिबद्धानि चेति लब्धम् । तानि च ज्ञापकन्यायासिद्धानीति तेषां पृथगुपादानम् । भाष्योपनिबद्धानि 'निर्दिश्यमानस्य—' इत्यादीनि । वार्तिकोपनिबद्धानि 'स्त्रीप्रत्यये च—' इत्यादीनि । एवं च भाष्यवार्तिकोपनिबद्धानि इत्येका कोटिरिति केषां चिद्व्याख्यानं नादरणीयम् । यत्तु— सर्वमङ्गलाकारः 'सूत्रपाठानवगतत्वे सति भाष्यवार्तिकावगतत्वं भाष्यवार्तिकनिबद्धत्वम्' इति निरवोचत् तदसङ्गतम् । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यस्य सूत्रपाठावगतत्वेनाव्याख्येयतापत्तेः ॥ **परिभाषारूपाणीति** ॥ प्रशंसायां रूपम् । 'क्वचित्स्वार्थिकाः' इति नपुंसकत्वम् ।

प्रशस्ताः परिभाषा इत्यर्थः। प्राशस्त्यं च बहुप्रयोजनवत्त्वम्। तेन ‘आगमशास्त्रमनित्यम्’ ‘संज्ञापूर्वको विधिरनित्यः’ इत्यादीनां बहुप्रयोजनवत्त्वाभावान्नाव्याख्यानं दोषः। तेषां निरूपणं तु खण्डनायैवेति बोध्यम्। एवं च भाष्यवार्तिकयोरुपनिबद्धानीत्यस्य ‘भाष्यवार्तिकसम्मतानीत्यर्थः’ इति विश्वनाथभट्टाद्युक्तिर्नातिविादर्तव्या। एवं सिद्धादिशब्दस्य अर्श आद्यजन्तत्वकल्पनया वाचनिकत्वसंग्रहो भीमाचार्यादिभिराश्रितः काकदन्तपरीक्षातुल्ययोगक्षेमः। परिभाषा च ज्ञापकसिद्धा, न्यायसिद्धा, उभयसिद्धा, भाष्योपनिबद्धा, वार्तिकोपनिबद्धा चेति तत्र तत्र वक्ष्यते। न च भाष्यवार्तिकयोरुपनिबद्धानि परिभाषारूपाणीतीयतैवालम्। भाष्यवार्तिकयोरुपनिबद्धत्वं च भाष्यवार्तिकमात्रावगतत्वम्। तच्च पाणिनीयसूत्रपाठानवगतत्वे सति भाष्यवार्तिकावगतत्वम्। एवं च सर्वेषामपि संग्रह इति शक्यम्, निर्दिश्यमानपरिभाषायाः सूत्रस्थज्ञापकसिद्धानां च पाणिनीयसूत्रपाठावगतत्वेनासंग्रहापत्तेः। व्याख्येयपरिभाषात्वंच ‘परितो व्यापृतां भाषां परिभाषां प्रचक्षते’ इत्यभियुक्तोक्तेः परितः सर्वतः शास्त्रेषु असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधप्रयोजकत्वरूपव्यापारवती भाषा वचनरूपा इत्यर्थावगमात् पाणिन्युच्चरितभिन्नत्वे सति असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिविधिशास्त्रीयबोधप्रयोजकत्वप्रकारकतात्पर्यविषयत्वमिति बोध्यम्। ‘भाष्यवार्तिकसम्मतत्वे सति ज्ञापकन्यायसिद्धत्वं व्याख्येयपरिभाषात्वम्’ इति विश्वनाथभट्टोक्तं तु न युक्तम्। ज्ञापकन्यायासिद्धानां ‘स्त्रीप्रत्यये चानुपसर्जने न’ इत्यादीनामसंग्रहापत्तेः। न हि ज्ञापकन्यायासिद्धानि व्याख्येयपरिभाषारूपाणि नैव सन्तीति वक्तुं शक्यते। ‘यस्मिन्विधिः—’ इत्यादौ ‘वाचानिक्येषा’ इत्याद्युल्लेखेन तेषां ज्ञापकन्यायसिद्धत्वाभावबोधनात्। नहि भाष्ये ज्ञापकन्यायौ नोपन्यस्ताविवत्येव तदर्थ इति वक्तुं युज्यते। तत्र भाष्यानुग्रहगन्धाभावे तदभावः सुतरामित्यलम्॥

अथ शास्त्रत्वसंपत्तिमन्तरा बाधचिन्ताया अनुदयाच्छास्त्रत्वप्रापिकाणां ‘एकदेशविकृतम्—’ इत्यन्तानां परिभाषाणां पूर्वं व्याख्यानमुपक्रममाणो

**ननु लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहाद-निर्णयोऽत आह—**

---

ज्ञापकसिद्धस्यैवादौ व्याख्येयत्वेन ज्ञापकत्वस्य च व्याख्यानैकसमधिगम्यत्वेन व्याख्यानस्य च शास्त्रार्थनिर्णायकत्वेन पाणिनिसूत्रमूलभूतचतुर्दशसूत्रान्तर्गत-लण्सूत्रीयणकारानुबन्धमूलकत्वादभ्यर्हितत्वेन च 'सिद्धे शब्दार्थे—' इत्यत्र भाष्ये प्रथममुदाहृतत्वेन च पतञ्जलिकृतव्याख्यानस्य यथोत्तरं प्रामाण्यं महे-श्वरेणाप्याहृतमिति बोधयन् सर्वोपयोगिनीं पूर्वं व्याख्यानविषयां परिभाषामव-तारयति—

**नन्विति** ॥ अणिण्पदघटितसूत्रेषु तद्घटकेऽणादिपदे लण्सूत्रीयण-कारघटितं वा अण्पदम्, अइउण्सूत्रीयणकारघटितं वा अण्पदमिति पदशक्तिसन्देहात्पदार्थसन्देहेन वाक्यार्थसन्देहः । तन्मात्रेण च अप्रामाण्यं अननुष्ठापकत्वलक्षणमापद्यते । ततश्च शास्त्रत्वमसन्दिग्धानाहार्याप्रामाण्यज्ञाना-नास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपं न संपद्यत इति अनर्थकं भवत्यणादिपदघटितमशेषमपि शास्त्रम् । ततश्चाननुष्ठापकत्वलक्ष-णमप्रामाण्यमास्कन्दि न हि निश्चित बोधमुपजनयतीति प्रामाण्यानुपयोगि, का-कदन्तपरीक्षणवदवद्यं स्यात् 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यादिकं शास्त्रम् । न हि केनापि दुरपलपं तस्मिन्वैयर्थ्यम् । यच्च 'वर्णेनाप्यनर्थकेन न भवितव्यम् । किं पुनरियता सूत्रेण' इति वृद्धिसूत्रस्थेन भाष्येण बोधितं फलमाक्षिपदलं भवति व्याख्यानपरिभाषाज्ञापने, ज्ञापनं च संपादयत् 'अणुदित्सवर्णस्य-चाप्रत्ययः' इत्यादिशास्त्रमहो भवति चरितार्थमात्मांशे निर्णीयमानं व्याख्या-नाधीनया संशयनिवृत्या । एवं च सन्देहमुपजनयितुमासज्यमानो णकारो न प्रत्याहारादिकं प्रवर्तते फलं प्रतिपादयितुम्, येन 'हयवरलट्' इति न्यासान्तरमपि 'इको यणचि' इत्यादावनुबन्धान्तरासंजनेन यडादिकं प्रत्याहारं निर्वोढुमीष्टे ॥ अथाश्रिते यडादिप्रत्याहारे स्यादेव लकारग्रहणमापादितमट्प्रत्याहार इत्युच्यते, तथा सति 'रषाभ्या—' इति सूत्रे 'रोरि' इति लोपितं द्विरेफनिर्देशेन प्र-श्लिष्टमुत्तरसूत्रीयाद्विशेषणार्थकं को हि नाम न विजानाति । विशेषिते च पूर्व-

रेफे रेफावधिकैरट्प्रत्याहारबोध्यवर्णैर्व्यवायेऽपीत्यर्थमाश्रयताम् । यश्च प्रागापादितं दोषमाक्षेप्तुमीष्टे । न हि प्रश्लेषेण गौरवं शक्यते वक्तुम्, यतः णकारानुच्चारणं पृथक्सूत्राकरणं असन्देहश्च संपद्यत इति महदेव फलमुपलभ्यते ॥ यदि पुनरिदमेव साक्षादुच्यते, 'विभाषेटः' इत्यादौ 'इणः षीध्वम्—' इत्यादिष्विडेव वक्तव्यः पूर्वस्मिन्निट्पदे विप्रतिपद्येत इति । तत्रेयं महती वाचोयुक्तिः । षीध्वमादिः खलु विशेषितो भवत्यङ्गेन । क्लृप्तं हि तत् । क्लृप्तपरित्यागे प्रतिपादनीयं हि प्रमाणं बलवत् । अपि च बाधितमव्यवहितोत्तरत्वं षीध्वमादेरिडागमाव्यवहितोत्तरेट्प्रत्याहारबोध्यवर्णापेक्षया । अवयवत्वावच्छिन्नविधेयताश्रयत्वं खलु निर्णीतमागमत्वस्वरूपतया । अवयवत्वं हि तत्र सनिरूपकम् । निरूपकश्च प्रत्यासत्त्या इट्प्रत्याहारबोध्यवर्ण इत्येवावश्यमङ्गीकर्तव्यः । 'दीधीवेवीटाम्' 'इट ईटि' इत्यादौ च न दोषविशेषावगति. । आदौ इडागमभिन्नाः न प्राप्नुवन्ति खलु गुणम् । दीधीवेवीग्रहणमप्यनुकूलमागमत्वे । अन्ते साहचर्यं हि प्रत्याहारं प्रतिहन्ति । एवं 'आर्धधातुकस्येड्वलादेः' इत्यत्रापि न प्रत्याहारग्रहणप्रसक्तिः । प्रत्याहारशक्तिग्राहकसूत्रे अविधीयमान इत्यर्थकाप्रत्ययपदानुवृत्त्यैव तद्वारणात् । न चैतावता 'किं पुनर्वर्णोत्सत्ताविवायं णकारो द्विरनुबध्यते' इति-लण्सूत्रस्थभाष्यस्वारस्यभङ्गः ॥ यत्तावदभिहितं वर्णोच्छेदे कर्तव्ये इति; तत्रेदमुच्यते— 'हयवरलट्' इति न्यासान्तरमाश्रित्य लण्सूत्रीयणकारस्य छेदे कर्तव्ये इत्येवार्थ इति । अन्यथा 'वर्णोत्सत्तौ—' इति न ब्रूयात् । 'इवायं णकारो द्विरनुबध्यते' इति तदुत्तरभाष्यमपि एवमेव योजनीयम् । अइउण्सूत्रीयणकार इवायं लण्सूत्रस्थो णकारः उपदिष्टः । कुतो द्विरनुबध्यते महेश्वरेणेति । 'वर्णान्तरमनुबन्धः किं न क्रियते' इति कैयटोऽपि णकारं छित्वा 'हयवरलट्' इति न्यासेन टोऽनुबन्धः कुतो न क्रियते इत्याशयक इति न तद्विरोधः । उद्योते तावत् "तत्र लाघवाद्वर्णान्तरमेव किं नानुबध्यते' इत्याशयेनाह— भाष्ये 'किं पुनरिति" इत्युक्तम् । अत्र ब्रूमः । यथाश्रुते 'हयवरट्' इति सूत्रे श्रावणप्रत्यक्षगोचरं टकारमुपलभमानस्य यष्टकारः पूर्वमुपदिष्टः स एव 'हयवरलट्' इति न्यासाश्रयणेन किं नानुबध्यते इति नूनमाशङ्का जायत एवेति भाष्याशय इति उद्योतकारेणाभिप्रेतमिति । कथमन्यथा पकाररूपानुबन्धान्तरासंजने, 'हण्' 'यवरलट्' इति

न्यासकरणे वा लाघवमनवेक्षमाणो वक्तुमेवं प्रवर्तेत । ईदृशी हि तस्य प्रवृत्तिः लाघवावगतिपूर्विकैव भवितव्या । यतः 'वर्णान्तरमेव' इत्युत्तरत्र एवकारमुपादत्ते । तत्र लाघवायेत्यस्य युज्यते न प्रतिपत्तिलाघवायेति व्याकर्तुम् । यतो भवति निष्फलमुत्तरत्रैवकारग्रहणम् । अणादिपदेषु प्रयासेन महता न कर्तव्यः परिहारः संशयस्येति बोधनायैव प्रतिपत्तिगौरवमिति पूर्वमुक्तम् । इदमेव च विवृण्वानो भगवान् भाष्यकारः 'णकारो द्विरनुबध्यते पूर्वश्चैव परश्च, तत्राणग्रहणेषु सन्देहो भवति पूर्वेण वा स्यु परेण वा' इति लण्सूत्रारम्भे स्पष्टमभिधत्ते ॥ यो हि 'अइउण्' 'लण्' सूत्रयो. णकारद्वयमुपलभमानः तस्यानर्थत्वं जानाति, स तावत् ततो मन्यते यथाश्रुतन्यासे यष्टकारः पूर्वः 'हयवरलट्' इति न्यासान्तरकरणेऽपि स एव न वर्णान्तरमिति लाघवं सन्देहाभावं च ॥ यो वा मोहाल्लण्सूत्रेऽपि अइउण्सूत्रीयणकारात्परं णकारमुपदिष्टमुपलभमानः तस्यानर्थत्वं न जानाति, स एव खलु सन्दिहानो भवति अण्ग्रहणेषु दृष्टेषु अण्पदघटितसूत्रेषु । संशेते हि पूर्वभूतअइउण्सूत्रघटकणकारेण वा घटितमण्पदम्, परभूतलण्सूत्रघटकणकारेण वेति । एवमिण्ग्रहणेषु दृष्टेषु इण्पदघटितसूत्रेषु । कथमन्यथा ब्रूयात् 'पूर्वश्च परश्च वा' इति । वक्तव्यं खलु स्यात् पूर्वत्र परत्र चेति । 'णकारो द्विरनुबध्यते' इति हि ब्रुवाणः पूर्वत्र परत्र च तदुपलब्धुमीष्टे । 'णकारो द्विरनुबध्यते' इति ब्रुवता पूर्वत्र परत्र च तदुपलभमानेन स्पष्टमुच्यते 'पूर्वेण वा परेण वा' इति । तदुभयसूत्रानुगतं संशयमात्रोत्पत्त्यालम्बनमाचरितं णकारोच्चारण लण्सूत्रे ललाटलोचनेन । इदमेव व्याकुर्वाणेन भगवता विचारितं लण्सूत्रे । कथमन्यथा स्वतन्त्रोऽपि 'हयवरट्' इत्यत्र हकारमिवोपलभमानो न पूर्वत्र अइउण्सूत्रे प्रवर्तेत विचारयितुम् । एवमेव लण्सूत्रीयणकारस्य संशयमात्रोत्पादनं फलमाशयानेन 'सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण' इति अग्रे मूलकारेण वक्ष्यते ॥ इदमत्र तत्वम्— यदुत्पादयति णकारः संशयमात्रं तद्घटितपदघटितं शास्त्रमास्कन्दितमप्रामाण्येन अननुष्ठापकत्वलक्षणेन अनर्थकत्वमात्मनो मुक्तकण्ठमाविष्करोतीति परिभाषाज्ञापने प्रभवति पर्याप्तमिति पतञ्जलिवचनमेव प्रबलमिति बोधयन्नपूर्वं 'यथोत्तरं मुनीनां प्रामाण्यम्' इति एतदीष्टे स्पष्टं प्रतिपादयितुमिति महेशगूढाकूतम् । इदमेव च व्यावृण्वानो मूलकारः 'सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण

सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्’ इति स्पष्टमुपरिष्टादुपपादयिष्यते । आशयानश्चामुमेवार्थं ‘तत्सिद्ध एवायमर्थः णकारानुबन्धरूपस्वव्यवहारेण बोध्यते’ इत्यभिदधानो मूलकारः स्वाशयं प्रकाशयत्युद्योतेन । तस्माण्णकारो लण्सूत्रीयः सन्देहमात्रमुपजनयितुमुपात्तः प्रमथपतिनेति ‘अणुदित्—’ ‘इको यणचि’ इत्यादावाश्रयमाणोऽनुबन्धं णकारमेव प्रवर्तते प्रत्याहरणे । यतो महेश्वरोऽपि णकारमनुबध्नन् न्यासमपरं ‘हयवरलट्’ इत्याश्रित्य, ‘अणुदित्—’ इत्यादौ न प्रत्याहरेत् अडादिकमिति बोधयन् संशयमेव प्रयतमानं संपादयति । संशयश्च परमास्कन्दितमात्मना, असन्दिग्धत्वमपघ्नन् लक्ष्यधर्मिकं साधुत्वप्रकारकं च ज्ञानमुपयोजयितुमुद्धुरं शास्त्रस्य प्रतिहन्ति बोधम् । बोधमात्रं तादृशमधिकृत्य प्रणीयमानं प्रयोजनप्रतिमुक्तं न हि न भवति निरर्थकं शास्त्रम् । प्रयासेन महता प्रणीतं पाणिनिनेदं शास्त्रमानर्थक्यमात्मनोऽभिसन्दधानं प्रयोजनं पर्यन्विष्यत् कल्पयितुमलं ‘व्याख्यानतः—’ इति परिभाषाम् । न हि णकारः साक्षादीष्टे कल्पयितुम् । यदेतद्व्याव्रृण्वानो मूलकारः शिङ्ग्रहणादिकमिव णकारममन्वानो वैयर्थ्यमनापादयन्नेव णकारोपदेशस्य ‘णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयः’ इति स्पष्टमवतारयति । तत्सकलमिदमभिप्रेत्याभिधत्ते— **लण्अइउण्सूत्रयोरित्यादिना ॥ णकारस्यैवोपादानेनेति ॥** एवकारोऽत्र भिन्नक्रमः । ‘लण्सूत्रे’ इति शेषः । पृथक्प्रणीय लण्सूत्रं णकारस्योपादानेनैवेत्यर्थः । कथमन्यथा ‘लण्अइउण्सूत्रयोः’ इति द्विवचनमनुसंदधानो णकारयोरिति नोपक्रमेत वक्तुम् । ‘णकार’ इति भाष्यमपि लण्सूत्र एव विचारेण तत्परमेवेति युज्यते वक्तुम् । अभिदधानश्च ‘णकारस्यैवोपादानेन’ इति मूलकारः सूचयति पूर्वमविचारयतः अइउण्सूत्रे भगवतो भाष्यकारस्याभिमतामाशङ्कां ‘हयवरलट्’ इति न्यासान्तरमाशयानस्यैव । न हि णकारस्येत्येतदन्वेतुं लण्अइउण्सूत्रयोरित्यत्र युज्यते । ब्रूयात्खलु तथा सति ‘अइउण्लण्सूत्रयोः’ इति । यदि हि पूर्वनिपातः स्यादल्पाच्त्वनिमित्तकः, तथा सत्यापतति प्राथम्येनाभ्यर्हितत्वादइउण्सूत्रस्यैव पूर्वनिपतनीयता । मम तु मते लण्सूत्रीयो णकारः संशयमात्रोत्पादनफलकः परमेश्वरेणोपदिष्ट इति बाधमानः कपिञ्जलाधिकरणन्यायमुत्पद्यते लण्सूत्रीयणकारघटितप्रत्याहारविषयक एव संशयः पूर्वमिति ‘लण्अ-

इउण्सूत्रयोः' इति ब्रुवाणो मूलकारः परमनुकूलः। द्विकोटिकोऽपि न हि संशयस्तथात्वे अइउण्सूत्रीयणकारघटितप्रत्याहारविषयकोऽपि भवति। अतोऽपि णकारघटितत्वाभावो न पूर्वमइउण्सूत्रीयणकारघटितत्वमवगमयति। पार्ष्णिकं हि तत्। यदि हि स्यादाश्रितं 'हयवरलट्' इति न्यासान्तरम्, तथा सति न भवेदुपात्तो णकार इति लाघवं संशयाभावश्चेति अनास्कन्दितमप्रामाण्येनाननुष्ठापकत्वलक्षणेन शास्त्रं प्रयोजनवदेवावगम्यत इति सर्वेष्टसिद्धिः॥ **अणिण्ग्रहणेष्विति**॥ अणिणौ गृह्येते एष्विति व्युत्पत्त्या अणिणन्यतरपदघटितसूत्रेष्वित्यर्थः फलितः। आधेयत्वं सप्तम्यर्थः। तद्घटकाणादिपदेष्विति यावत्॥ **सन्देहादिति**॥ अत्रैव लण्अइउण्सूत्रयोरित्यस्य संबन्धः। अणादिपदं लण्सूत्रवृत्तिणकारन्तसमुदाये शक्तं वा, अइउण्सूत्रवृत्तिणकारान्तसमुदाये शक्तं वा, इति पदशक्तिसन्देहादित्यर्थः। यदि च संशयस्य परिपन्थिनी प्रत्यासत्तिः, बाधिता खलु सा भवति णकारमनुबध्नता लण्सूत्रे महेश्वरेण। न हि तावता णकारस्य शक्तिः प्रतिहन्यते सशयस्योपजनने। 'प्राग्रीश्वरान्निपाताः' इति रेफविशिष्टग्रहणं कुर्वाणः पाणिनिरेवाचार्यः प्रत्याययति प्रत्यासत्त्यपेक्षया व्याप्तेर्बलवत्तामिति प्रत्यासत्तिव्याप्ती परस्परं विप्रतिषिद्धे प्रकृते न हि निर्वोढुं शक्नुत इति न खलु विहन्यते संशीतिः। यदोपेक्षितं त्रयाणामिति पदग्रहणमाचार्येण 'निजां त्रयाणाम्—' इति सूत्रे, तदा स्यादस्मिन्नपि शास्त्रे निष्प्रतिबद्धप्रसरः कपिञ्जलाधिकरणन्यायः॥ अथ अण्पदत्वं शक्ततावच्छेदकं, शक्यतावच्छेदकं च अकारादिणकारान्तसमुदायघटकत्वम्, अथवा अकारादिणकारान्तसमुदायघटकबोध्यत्वमित्युभयमेकमेव भवति। अतो न खलु संशेतां यश्च स्यादेकाधिकरणावृत्तयः ये अनेके धर्माः तत्संबन्धनिष्ठविषयतानिरूपकः तत्रैव खलु संशयानो भवतीति चेत्, यो हि 'आदिरन्त्येन—' इति सूत्रेण अणादिपदानां शक्तिं अइउ एतदन्यमत्वावच्छिन्ने, अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, एतदन्यतमत्वावच्छिन्ने च गृह्णाति, स एकः परं भवति सन्दिहानः पूर्वेण वा परेण वेति। नह्येतत् अ इ उ एतदन्यतमत्वं अकारभिन्नत्वे सति यः इकारभिन्नः तद्भिन्नत्वे सति यः उकारभिन्नः तद्भिन्नत्वम्। एवं अकारभिन्नत्वे सति यः उकारभिन्नः तद्भिन्नत्वे सति यः इकारभिन्नः तद्भिन्नत्वम्। एवं इकारभिन्नत्वे सति यः उकारभिन्नः तद्भिन्नत्वे सति योऽकार-

भिन्न: तद्भिन्नत्वम् । एवं इकारभिन्नत्वे सति य: अकारभिन्न: तद्भिन्नत्वे सति य: उकारभिन्न: तद्भिन्नत्वम् । एवं उकारभिन्नत्वे सति योऽकारभिन्न: तद्भिन्नत्वे सति य: इकारभिन्न: तद्भिन्नत्वम् । एवं उकारभिन्नत्वे सति य: इकारभिन्न: तद्भिन्नत्वे सति योऽकारभिन्न: तद्भिन्नत्वमिति विनिगमनाविरहेण विशेषणविशेष्यभावे नानाशक्यतावच्छेदकापत्तिरेकविषय एव स्यात् । अतो भेदाना 'एकत्र द्वयम्' इति रीत्या त्रित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन विशेषणमभाव एवेति नान्वय: परस्परमिति अकारभेद-इकारभेद-उकारभेद-एतत्रितयात्यन्ताभाववत्त्वमेवावश्यमङ्गीकर्तव्यं भवति अ इ-उ-एतदन्यतमत्वम् ॥ अनिर्णय इति ॥ निर्णयोऽस्मान्न भवतीत्यनिर्णय: । 'अल्पाक्षरमसन्दिग्धम्—' इति स्मरन् सन्दिग्धार्थकत्वेन सूत्रत्वं निराकुर्वाण: प्रमाजनकत्वरूपस्योपलभ्य प्रामाण्यस्याभावमसन्दिग्धमनाहार्यमनास्कन्दितमप्रामाण्यज्ञानेन लक्ष्यधर्मिकं साधुत्वप्रकारकं च ज्ञानमुपयोजयितुमुद्यतस्य बोधस्योपजनने असमर्थस्य आनर्थक्यं शास्त्रस्योपजानानो वैयर्थ्यमेव तस्य दृढीकरोतीति भाव: । व्यर्थीभूतमेव शिड्ग्रहणादिकं यथा वाऽलं भवति ज्ञापने परिभाषाणामिति प्रतिपादयिष्यते, तथेहापि वैयर्थ्येन कञ्चुकितं 'अणुदित्सवर्णस्य—' इत्यादिकं शास्त्रं प्रकृतपरिभाषां ज्ञापयितुमुद्धुरमेव भवति, न णकार इति सूचयत्यनेन । न हि शिड्ग्रहणादिक इव नापादितं भवति वैयर्थ्यं शास्त्र इति नूनमाशङ्का जायते । वैयर्थ्यमापादयितुं 'अणुदित्सवर्णस्य—' इत्यादिशास्त्रस्य निदानभूतमसन्दिग्धमनाहार्यमनास्कन्दितमप्रामाण्यज्ञानेन लक्ष्यधर्मिकं साधुत्वप्रकारकं च ज्ञानमुपयोजयितुमुपरचितस्यैव शास्त्रस्यापाद्यमानमानर्थक्यमेव निश्चिन्वान: प्रववृते प्रतिपादयितुकामो वैयर्थ्यम् । अत एव न विभावयाम: शङ्काया अवकाशम् ॥ अत आहेति ॥ ल्यब्लोपे पञ्चमी चेयम् । शास्त्रमेव नेष्टे जनयितुं निश्चितबोधमिति तदभावे जायमानमानर्थक्यमादिभूतमाकलय्योत्पद्यमानमाशङ्क्य वैयर्थ्यं ब्रवीति तत्परिहारमित्यर्थ: ॥

व्याख्यानत इति ॥ हेतुपञ्चम्यन्तादाद्यादित्वात्सार्वविभक्तिकस्तसि: ; न तु पञ्चम्यास्तसिल् । तत्र 'किंसर्वनामबहुभ्य:' इत्यनुवृत्ते: । महेश्वरप्रसादलब्धै: सूत्रसमुदायै: एकवाक्यतामापन्नेन सूत्रेण संवलितस्य कृत्स्नस्य व्या-

## व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥ १ ॥

करणशास्त्रस्य सर्वस्वभूतमर्थविशेषं प्रकाशयितुं प्रवृत्तस्य भगवतः पतञ्जलेर्वचनादित्यर्थः ॥ विशेषप्रतिपत्तिरिति ॥ प्रतिपत्तिकर्तुर्गम्यत्वेऽपि तस्य प्रयोगाभावात्, 'उभयप्राप्तौ कर्मणि' इति नियमं प्रवर्तयितुमाशङ्कमानैः 'कर्मणि च' इति निषेधस्याविषयतया समासप्रवृत्तिः । अकाकारव्यतिरिक्तस्त्रीप्रत्यये 'शेषे विभाषा' इति वचनात् 'कर्तृकर्मणोः—' इति षष्ठीप्रवृत्त्या कर्मणः शेषत्वविवक्षया वा तत्प्रवृत्तिरभ्युपगम्यते । अन्यतराद्यर्थविशेषविषयकनिश्चयज्ञानमित्यर्थः। संपादनीयमिति शेषः ॥ न हि सन्देहादलक्षणमिति ॥ तच्छब्दः शास्त्रमिति चाध्याहार्यम् । हिशब्दो लोकप्रसिद्धहेतौ । नञर्थनिषेधेऽयं हेतुः । सन्देहादिति त्वलक्षणत्वे । अलक्षणं चाननुष्ठापकम् । तच्च लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावरूपम् । तथा च यस्मादन्यतराद्यर्थविशेषविषयकनिश्चयज्ञानाच्छास्त्रं सन्देहेन प्रयोज्यं लक्ष्यधर्मिकस्य च साधुत्वप्रकारकस्य ज्ञानस्योपजनने असमर्थमेव बोधमुपजनयतीति लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावरूपेणाननुष्ठापकत्वलक्षणेनाप्रामाण्येन जन्यमानेनानर्थक्येनावस्कन्द्यमानं नैव भवति वैयर्थ्यवदिति सा विशेषप्रतिपत्तिर्महेश्वरसूत्रैकवाक्यतापन्नसूत्रघटितशास्त्रार्थरहस्यप्रकाशकपतञ्जलिवचनादेव सम्पादनीया नान्यत इति नियमः । विशिष्टमाख्यानं हि व्याख्यानम् । वैशिष्ट्यं च प्रकृते महेश्वरप्रसादलब्धसूत्रैकवाक्यतापन्नसूत्रघटितशास्त्रार्थरहस्यप्रकाशकपतञ्जलिकर्तृकत्वमेव । एतच्च लण्सूत्रे णकारमनुबध्नतैव परमेश्वरेण ध्वनितम् । अन्यथा आचार्यपरम्परावगतेन प्रकरणादिरूपेणोपदेशेन व्याख्यातृवचसां व्याख्येयवचनार्थनिर्णायकत्वं लोकसिद्धमेवेति तस्यास्त्राप्याश्रयणे परमलेखशब्दे परेऽपि हृदादेशप्रवृत्तये लेखग्रहणस्यावश्यकत्वेन तस्य 'उत्तरपदाधिकारे—' इति परिभाषाज्ञापकत्वं न संगच्छेत इति 'वैशिष्ट्यमाचार्यपरम्परावगतत्वम् । एवं च 'अभियुक्तकृतविवरणरूपाद्व्याख्यानादित्यर्थः' इति सर्वमङ्गलोक्तम्, 'व्याख्यातृवचसां व्याख्येयवचनार्थतात्पर्यनिर्णायकत्वस्यौत्सर्गिक-

त्वेन तदर्थं परिभाषारम्भः तज्ज्ञापकं च विफलम्। न हि 'क्षुन्निवृत्तये भोजनं कार्यं' इति वचनमाचार्येण निरमायि' इति रामकृष्णोक्तं च न क्षोदक्षममिति विभावयन्तु विद्वांसः। अनया तु परिभाषया बोधिते संशयनिवर्तने व्याख्यानाधीने 'अणुदित्सवर्णस्य—' इत्यादौ परेणैवाण्ग्रहणम्, अन्यत्र तु पूर्वेण, इत्यादि निश्चिन्वानाः निवृत्तसंशयाः लक्ष्यधर्मिकं साधुत्वप्रकारकं चानास्कन्दितमप्रामाण्येनाहार्येण संशयेन च ज्ञानमुपयोजयितुमुद्धुरं बोधमुपजनयन्तु 'अणुदित्सवर्णस्य—' इत्यादिषु शास्त्रेष्वननुष्ठापकत्वलक्षणेनाप्रामाण्येनोद्भावितस्यानर्थक्यस्य निर्विषयतां निरूपयन्तः संपादयन्ति स्वांशे चारितार्थ्यम्। व्याख्यानाधीना संशयनिवृत्तिः। व्याख्यानस्य च संशयनिवर्तकत्वमेतत्परिभाषाधीनम्। एषा च परिभाषा व्याख्यानसाध्येति यागे कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या तदुपपादकस्यापूर्वस्य कल्पनवदत्रापि व्याख्याने संशयनिवर्तकत्वान्यथानुपपत्त्या तदुपपादकस्य 'व्याख्यानतः—' इति परिभाषावचनस्य कल्पनमिति याग इव व्याख्यानं कारणम्, स्वर्ग इव संशयनिवृत्तिः फलम्, अपूर्व इव परिभाषा व्यापारः। एवं च परिभाषायाः व्याख्यानजन्यत्वे सति व्याख्यानजन्यसंशयनिवृत्तिजनकत्वेन तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वं सिध्यत्येवेति 'परिभाषायां तज्जन्यत्वाभावेन तज्जन्यजनकत्वाभावेन चाव्यापारत्वात् तेन तत्कल्पनं न संभवति' इत्याशङ्क्य 'तुल्यन्यायेन तत् ज्ञाप्यत्वे सति तत् ज्ञाप्यज्ञापकस्यापि' इति परिष्कुर्वाणः सर्वमङ्गलाकारः प्रत्युक्तः। परिभाषान्तरेष्वपि शिद्ग्रहणं कारणम्, सर्वादेशत्वसंपत्तिः फलम्, 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषा व्यापारः इत्यादि सम्भवतीति अपूर्व इव परिभाषास्वपि तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्य सूपपादत्वात्। व्याख्यातृवचसां प्रकरणादिना व्याख्येयवचनतात्पर्यार्थनिर्णायकत्वं लोकसिद्धमपूर्वमेव भवतीति परिभाषयाऽनया शास्त्रेऽस्मिन् संशयास्कन्दितस्थले अन्यतराद्यर्थविशेषविषयकनिश्चयज्ञानं पतञ्जलिवचनादेव संपादनीयम्, नान्यस्मात्प्रकरणादेरिति नियमो बोध्यते। फलं च नियमबोधने लेखग्रहणम् 'उत्तरपदाधिकारे—' इति परिभाषां ज्ञापयितुमलमिति; अन्यथा घञन्तलेखग्रहणेनापि सार्थक्यसंभवः। 'व्रीहीनवहन्ति' इत्यादौ दर्शपूर्णमासयोराग्नेयादियागानामुत्पत्तौ पुरोडाशद्रव्यं विहितम्; व्रीहयस्तु उ-

त्पन्ने यागे यागानुवादेन विहिताः; ततश्च उत्पन्नशिष्टानां व्रीहीणामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे साक्षात्साधनत्वायोगात्पुरोडाशप्रकृतिद्रव्यत्वेन यागसाधनत्वं सिध्यति । पुरोडाशप्रकृतित्वं च व्रीहीणां तण्डुलनिष्पत्तिद्वारकम् । तण्डुलनिष्पत्तिश्च व्रीहीणां स्वकारणमाक्षिपति । तण्डुलनिष्पत्तौ च कारणमवहननं निश्चितमिति विधित्सितावहननस्य वितुषीकरणसाधनत्वेन नखविदलनाश्मकुट्टनयोरिव लोकावगतकारणत्वाविशेषात्संभवति यथा प्राप्तिः पाक्षिकी, लेखान्ते उत्तरपदेऽपि हृदादेशसिद्धये, घञन्ते च तत्सिद्धये अणन्ते चेति व्याख्यानस्यापि तथा प्राप्तिः पाक्षिकीति तदंशेऽप्राप्तांशपरिपूरणफलको विधिरयमिति तात्पर्यविषयतावच्छेदकतापर्याप्त्यधिकरणीभूताभावाभाववत्वमस्य स्पष्टम् । 'क्त्र्यैः' इत्यत्र क्त्रिप्रत्ययस्य, क्त्रेप्रत्ययस्य च, प्रसक्तौ प्रतिपदोक्तत्वमूलकाद्व्याख्यानात् क्त्रेप्रत्ययस्यैव ग्रहणमिति नियमः । 'इजादेः सनुमः' 'अट्कुप्वाङ्—' इत्यत्र नुम्पदस्य नकारो वाच्यार्थो वा, केवलानुस्वारो लक्ष्यार्थो वा, नुम्स्थानिकानुस्वारो लक्ष्यार्थो वा, इति त्रयाणां पाक्षिक्यां प्राप्तावनुस्वारस्यैव ग्रहणमिति व्याख्यानादेव नियमः; 'नुम्विसर्जनीय—' इत्यत्रापि नुम्स्थानिकानुस्वारस्यैवेति नियमः; एवं 'तस्मादित्युत्तरस्य' इत्यत्र तस्मादिति पञ्चम्यन्तानामेव ग्रहणम्, न स्वरूपस्येति नियमः; एवमेव 'तस्मिन्—' इत्यत्रापि । 'अतःकृकमि—' इत्यत्र कमेः कंसः; न तु कंसेरिति नियमः, हेत्वर्थकं हिशब्दं प्रयुञ्जानस्यानुमानप्रयोगोऽप्यत्राभिमत इति प्रतिभाति । तथाहि— यत्र 'सर्वनाम्नः स्मै' 'जसःशी' इत्यादिकं शास्त्रजातं तदसन्दिग्धमनाहार्यमनास्कन्दितमप्रामाण्यज्ञानेन लक्ष्यधर्मिकं साधुत्वप्रकारकं ज्ञानमुपयोजयितुमुद्धुरमेव बोधमुपजनयतीति तत्र शास्त्रत्वसंपत्तिमुपलभमानमपि सन्दिग्धार्थकम् 'अणुदित्सवर्णस्य—' इत्यादिकं शास्त्रं तमीष्टे नोपजनयितुं बोधमिति शास्त्रमप्यशेषमिदं पाणिनीयमसन्दिग्धमनाहार्यमनास्कन्दितमप्रामाण्यज्ञानेन लक्ष्यधर्मिकं साधुत्वप्रकारकं च ज्ञानमुपयोजयन्तमुपजनयति न वेति बोधम्, सन्दिहानो भवति । सन्दिहानश्चाणपदार्थसन्देहमेव निदानमाकलयति । हन्त! अन्ततो अण्पदार्थसन्देहस्य च मूलहेतुं महेश्वरोच्चरितं लण्सूत्रीयं णकारमेव निश्चिनोति । ततश्च असन्दिग्धमुपयोजयितुमकुशलस्य ज्ञानमादिहेतुर्बोधस्य

अण्पदार्थसन्देह एवेति मन्वानः मूलभूतं तस्यापि जानाति णकारोपादानमेव। संशयप्रदर्शनं चावतरणग्रन्थे सूत्रेष्वणिणन्यतरपदघटितेषु न ह्यनास्कन्द्यमानं सन्देहेन साधुत्वप्रकारकं लक्ष्यधर्मिकं च ज्ञानमुपयोजयन्नुपजायते बोध इति तेषु सन्देहानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वमनुपलभमानः तदन्येषु तदुपलभमानश्च शास्त्रमुक्तबोधजनकं वा, न वा इति सन्दिहानः, सन्देहहेतुमुक्तबोधजनकत्वाभावमेव जानानः, तस्याणिण्पदार्थसंशयमेव साधकं समीक्षमाणः तच्चोच्चारणेन णकारस्य लण्सूत्रीयस्य प्रयुक्तमिति परं जानाति। मन्यते च ‘अनिर्णयः’ इत्युक्तिमुक्तबोधजनकत्वसंशयफलप्रदर्शनपराम्। प्रयुञ्ज्महे चानुमानम्—‘शास्त्रम्, असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकम्, पतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्वात्’ इति। असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वव्याप्यपतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्ववच्छास्त्रमित्याकारकपरामर्शेन शास्त्रमसन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्ववत् इत्यनुमितिर्जायते। तद्विषयतया च शास्त्रे असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वं सिध्यति। यद्यत्पतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्ववत्, तत्तदसंदिग्धानाहार्याप्रामाण्य ज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्ववत् इति व्याप्तिः। प्रत्याख्यातशास्त्राणां प्रत्याख्यानस्य सूत्रार्थवर्णनतत्फलप्रदर्शनपुरस्कृतत्वेन पतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्वमस्त्येवेति न दोषः। फलभेदे प्रत्याख्यानायोगात्फलप्रदर्शनपुरःसरमेव तत्संभवेन तस्याप्यसन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वसद्भावेन प्रत्याख्यानस्य पतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्वेऽपि न व्यभिचारः। ‘न बहुव्रीहौ’ इत्यस्य तु त्वत्कपितृक इति लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वम् प्रत्याख्यानस्य च तत्सूत्रार्थवर्णनपूर्वकत्वेन पतञ्जलिवचनप्रतिपाद्यनिश्चितार्थबोधकत्वं च वर्तत इति न दोषः। एतेन हि ‘यतः इति यस्माद्धेतोरित्यर्थः। वस्तुतस्तु इदं व्याख्यानमनुचितम्। यद्यल्लक्षणं तत्तदनुष्ठापकमिति व्याप्तेः। ‘न बहुव्रीहौ’ इत्यादिप्रत्याख्यातलक्षणानां त्वत्कपितृक

इत्यादिलक्ष्यानुनुष्ठापकत्वेन व्यभिचारेणासंभवात्' इति विश्वनाथभट्टोक्तमपास्तम् । लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वस्यैवानुष्ठापकत्वस्वरूपतया अङ्गीकारेण यथोत्तरं मुनीनां प्रामाण्येन प्रत्याख्यानस्य त्वकतिपतृक इति लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वेऽपि 'न बहुव्रीहौ' इत्यादिषु प्रत्याख्यातशास्त्रेषु प्रत्याख्यानात्पूर्वं त्वत्कपितृक इति लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वेनानुष्ठापकत्वस्य दुरपलपत्वेन व्यभिचाराभावात् । प्रत्याख्यानानन्तरमपि तच्छास्त्राणां लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वस्य सत्वेनानुष्ठापकत्वस्याव्याघाताच्च । न हि प्रत्याख्यानेन तेषु निषिध्यते लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वम् । अपि तर्हि तत्फलस्यान्यथासिद्धत्वमननुमतत्वं च बोध्यते । न चैतावता लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वं भज्यते । त्वत्कपितृक इति लक्ष्यस्य भाष्याननुमतत्वेऽपि कथम् 'न बहुव्रीहौ' इति शास्त्रस्य तल्लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्व विहन्यताम् ? न हि प्रवर्तकत्वमनुष्ठापकत्वमित्येतावता व्याप्तिर्भज्यते । प्रवर्तकत्वं च प्रवृत्त्यनुकूलत्वम् । प्रवृत्तिश्च प्रकृते लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोग्युपस्थितिरूपा । अनुकूलत्वं च तज्जनकत्वम् । तथा च लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वमेव संगृहीतमक्षरस्वारस्येनेति प्रत्याख्यातशास्त्रेष्वपि तत्सूपपादमिति न व्याप्तेरनवकाशलेशः । साधनानन्तरं च शास्त्राणा असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वनिश्चयेन न सन्देहहेतुकाप्रामाण्यहेतुकं शास्त्रवैयर्थ्यम् । सन्देहेनैव खलु शास्त्रवैयर्थ्यम्, न प्रत्याख्यानादिना । इष्टफलकत्वाभावस्यैव प्रत्याख्यानपदार्थत्वात् । तत्र बोध्यार्थराहित्यरूपमानर्थक्यमिति न निष्प्रयोजनत्वरूपानर्थक्यहेतुकं शास्त्रवैयर्थ्यम् । सन्देहे तु तत्प्रयोज्यलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावरूपाननुष्ठापकत्वलक्षणाप्रामाण्यहेतुकनिष्प्रयोजनत्वमूलकं वैयर्थ्यं शास्त्रस्य दुरपलपम् । अथाज्ञानामपि पारायणे धर्ममुपशृण्वन् संशयास्कन्दितेष्वपि 'अणुदित्सवर्णस्य—' इत्यादिषु न निष्प्रयोजनत्वरूपमानर्थक्यं मन्यते । स एव खलु अननुष्ठापकत्वलक्षणाप्रामाण्ये वैदिकशब्दधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावेन निश्चिनोत्येव धर्मार्थत्वाभावम् । यदि प्रत्याख्यातशास्त्राणां बो-

विशेषस्य अन्यतराद्यर्थरूपस्य व्याख्यानात् शिष्टकृतात् प्रतिपत्तिः निश्चयः । हि यतः, सन्देहात् शास्त्रम् अलक्षणम् अन-

---

र्थ्यार्थराहित्येनाननुष्ठापकत्वलक्षणाप्रामाण्याभिन्नप्रयोजनत्वरूपमानर्थक्यमापति-तमेवेत्युच्यते; तर्हि बोध्यजन्यफलप्रतियोगिकाभावाश्रयत्वं बोध्यार्थराहित्यमि-त्याश्रित्य तेषामुक्तबोधजनकत्वं प्रतिपाद्य अनुष्ठापकत्वादप्रामाण्याभावमुपवर्ण्य निष्प्रयोजनत्वरूपानर्थक्यस्य अभावमेव निश्चिन्वीत । तच्छास्त्रबोध्यजन्यफला-नां अन्यथासिद्धत्वेन बोध्यजन्यफलप्रतियोगिकाभावाश्रयत्वं सूपपादम् । निष्प्रयोजनत्वं तु न तेषाम्, धर्मश्रवणेन सप्रयोजनत्वात् । 'न बहुव्रीहौ' इत्यत्र तद्बोधितफलस्यानन्यथासिद्धत्वेऽपि भाष्याननुगृहीतत्वेन बोध्यजन्यफलप्रतियो-गिकाभावाश्रयत्वमुपपद्यत एवेति प्रत्याख्यातेषु लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञा-नोपयोगिबोधजनकत्वसम्भवेनानुष्ठापकत्वादप्रामाण्याभावेन निष्प्रयोजनत्वा-भावः । संशयास्कन्दितानां तु निर्णयं प्रति सन्देहस्य प्रतिबन्धकत्वेन पदार्थ-सन्देहेन वाक्यार्थसन्देहात् वाक्यार्थबोधस्यैवानुदय इति तद्बोध्यस्यैवाभावेन तज्जन्यफलप्रतियोगिकाभावाश्रयत्वं न संभवत्येवेति द्रढीयाननुबन्धः । एतेन 'हिस्त्वर्थे, तथा सति सन्देहमात्रेण लक्षणमलक्षणं न भवति, प्रत्याख्यानादिना लक्षणमलक्षणं भवदपि सन्देहमात्रेण लक्षणमलक्षणं न भवतीत्यर्थः' इति वदन् विश्वनाथभट्टः प्रत्युक्तः । तद्रीत्या 'न हि सन्देहादलक्षणम्' इत्यं-शस्य परिभाषायामानर्थक्यापत्तेः; उक्तरीत्या सन्देहमात्रेणैव लक्षणेऽलक्षण-त्वस्य दुरपलपत्वाच्च; प्रत्याख्यानेनैव अलक्षणत्वानापत्तेश्च; तद्रीत्या प्रत्या-ख्यातानामलक्षणत्वेनाप्रवर्तकत्वात् पारायणे धर्मश्रवणेन प्रवृत्त्यनापत्तेश्च । हेतु-साधकमप्यत्र सूचितमनुमानान्तरम् । तथा हि— 'पतञ्जलिवचनं संशयनि-वर्तकम्, अन्यतराद्यर्थविशेषविषयकनिश्चयज्ञानसंपादकत्वात्' । संशयनिवर्तक-त्वव्याप्यान्यतराद्यर्थविशेषविषयकनिश्चयज्ञानसंपादकत्ववत्पतञ्जलिवचनमित्या-कारकपरामर्शेन 'व्याख्यानं संशयनिवर्तकं' इत्यनुमितिर्जायते । तद्विषयत-या च व्याख्याने संशयनिवर्तकत्वं सिध्यति । तदेतत्सकलमभिप्रेत्याह— हि यत इति ॥ यस्माद्धेतोरित्यर्थः । अनेन 'न तु लक्षणाभावः' इति सीरदेवोक्तं न युक्तमिति ध्वनितम् ॥ सन्देहादिति ॥ बहुकोटिक-द्विकोटिक-एतदन्यतरप-

नुष्ठापकम्, तथा न । शास्त्रस्य निर्णयजनकत्वौचित्यात् इत्यर्थः । असन्दिग्धानुष्ठानसिध्यर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्दे-

---

दार्थसन्देहादित्यर्थः । अत एव पूर्वं 'विशेषस्यान्यतराद्यर्थरूपस्य' इति व्याख्यातम् । तत्र आदिपदं बहुकोटिकसंशयेऽन्यतमपरिग्रहायेति बोध्यम् ॥ शास्त्रमिति ॥ इदमध्याहारलभ्यम्, प्रस्तुतत्वात् ॥ ननु सैन्धवमानयेति वाक्य इव प्रामाण्यरूपलक्षणत्वस्य पाणिनिप्रणीतेऽस्मिन् शास्त्रे निषेधासंभवादलक्षणपदार्थो दुर्वच इत्यत आह— अननुष्ठापकमिति ॥ लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपलक्षणशब्देन अभावार्थकनञः समासः । तथा च अननुष्ठापकत्वं लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावरूपमिति फलितम् । यत्तु सर्वमङ्गलाकारेण 'प्रमाणार्थकलक्षणशब्देनाप्रशस्तार्थकनञः समासः; अप्रशस्तत्वं च अनुष्ठानप्रतिबन्धकीभूतसन्देहविषयार्थबोधकत्वेनेति शास्त्रस्याननुष्ठापकत्वं फलति' इत्युक्तम्, तन्न विचारसहम् । प्रमाणत्वस्य यथार्थनिर्णयजनकत्वरूपत्वेन तत्राननुष्ठापकत्वस्य बाधात्; लक्षणत्वेनाभिमतमित्यर्थेऽपि अननुष्ठापकत्वस्यानन्वयापत्तेश्च; लक्षणत्वेनाभिमतमप्रशस्तं नेत्यर्थस्य शब्दमर्यादयाऽलाभाच्च; तदुक्तस्य शास्त्रपदाध्याहारस्य वैयर्थ्यापाताच्च ॥ तथा नेति ॥ शास्त्रं लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपानुष्ठापकत्वाभाववन्नेत्यर्थः ॥ अथ पाणिनिप्रणीतस्यास्य शास्त्रस्य संशयमात्रेण कथमननुष्ठापकत्वलक्षणाप्रामाण्यहेतुकानर्थक्यमूलकं स्याद्वैयर्थ्यम् । 'वर्णेनाप्यनर्थकेन न भवितव्यम्, किं पुनरियता सूत्रेण' इति वृद्धिसूत्रस्थभाष्यविरोधादित्यत आह— शास्त्रस्य निर्णयजनकत्वौचित्यादिति ॥ अनुष्ठानप्रतिबन्धकसन्देहविषयार्थकत्वेन 'अल्पाक्षरमसन्दिग्धम्—' इति स्मरणात् असन्दिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वाभावादननुष्ठापकत्वलक्षणेनाप्रामाण्येन जनितेनोत्पद्यमानमानर्थक्येन वैयर्थ्यं दुर्वारं शास्त्रस्येति भावः ॥ अथ 'हयवरलट्' इति न्यासानुरोधेन अडादिप्रत्याहारमेवाश्रयताम्, सन्देहस्तु नैवोत्पद्यते, 'लण्' इति पृथक्सूत्रं च न कर्तव्यम्, मास्तु वा णकारोच्चारणम् । न च ज्ञाप्यतामेषा परिभाषा, तत्र तत्र ज्ञापकाश्रयणेनैव प्रकरणादिना तात्पर्यनिर्णयस्य बाधे भवत्येवेष्टसिद्धिरित्यत आह— असन्दि-

हनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्। तेन

---

ग्धेति ॥ अनुष्ठानं लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधः सन्देहनिवर्तन एव तत्संभवात् सन्देहानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वसिद्धिफलकेऽस्मिन् पाणिनिशास्त्रे इत्यर्थः। सन्दिग्धं सन्देहः, भावे क्तः। न विद्यते सन्दिग्धं सन्देहो यस्मिन्नित्यर्थः॥ **सन्दिग्धोच्चारणेति**॥ भावक्तान्तप्रकृतिकार्शाद्यजन्तं सन्देहजनकोच्चारणमित्यर्थः॥ **आचार्यव्यवहारेणेति**॥ अत्र आचार्यपदेन महेश्वरः। महेश्वरकृतेन सन्देहोत्पादनफलकेन लण्सूत्रीयणकारोच्चारणेनेत्यर्थः॥ **व्याख्यानातिरिक्तनिमित्तानपेक्षत्वमिति**॥ व्याख्यानं पतञ्जलिवचनम्, तदतिरिक्तनिमित्ते पाणिनिकात्यायनवचने तदनपेक्षत्वमित्यर्थः। तच्च तदभावप्रयोज्याभावप्रतियोगित्वाभावरूपम्। महेश्वरोच्चारितेन लण्सूत्रीयणकारेण पाणिनिकात्यायनवचनापेक्षया पतञ्जलिवचनस्यैव प्राबल्यं बोध्यत इति यावत्। अत एव ‘व्याख्याननिमित्तापेक्षत्वम्’ इत्येव नोक्तम्। ‘हयवरलट्’ इति न्यासेनैव निर्वाहे सन्देहोत्पादनफलकेन लण्सूत्रीयणकारोच्चारणेन ‘यथोत्तरं मुनीनां प्रामाण्यम्’ इत्येतद्बोध्यते। एवं चास्मिन् शास्त्रे सन्देहास्कन्दितस्थले सन्देहनिवृत्तिः पतञ्जलिवचनातिरिक्तपाणिनिकात्यायनवचनाभावप्रयोज्याभवप्रतियोगिनी नेति फलितम्। तत्फलं तु ‘त्वकत्पितृको मकत्पितृकः’ इति लक्ष्यसिद्धिः। अन्यथा पाणिनिवचनानुरोधेन ‘त्वत्कपितृको मत्कपितृकः’ इत्यस्यैव साधुत्वं स्यात्। त्रयाणामपि ऋषित्वाविशेषात् कस्य वचनं प्रमाणं कस्याप्रमाणं इति निर्णयो न स्यादिति भावः॥ **बोध्यत इति**॥ असन्देहाय लाघवानुरोधेन च ‘हयवरलट्’ इति न्यासान्तरे करणीये सन्देहजनकणकारोच्चारणसार्थक्यान्यथानुपपत्या तदुपपादकं प्रत्याहारातिरिक्तं ‘यथोत्तरं मुनीनां प्रामाण्यम्’ इत्येतद्वचनं बोध्यत इत्यर्थः॥ यत्तु— बोध्यत इत्युक्त्या ‘नान्यस्यैव ज्ञापकता भगवताभिप्रेता इति सूचितम्’ इति यागेश्वरादिभिरुक्तम्, तत्तुच्छम्। उक्तरीत्या अण्पदघटितशास्त्राणामेव खल्वङ्गीक्रियते ज्ञापकता। न हि णकाराद्विरुपदेशस्य। येन स्वांशे चारितार्थ्याभावो दुर्निवारः। अत एव भगवता ‘किमिदं वर्णोत्सत्ताविवार्यं णकारो द्विरनुबध्यते, एतत् ज्ञापयत्याचार्यः, भवत्येषा परिभाषा, ‘व्याख्या-

नतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति' इत्युक्तम्। तत्र ज्ञापयतीत्यस्य बोधयतीत्यर्थकत्वं न युक्तम्। अक्षरस्वारस्यभङ्गापत्तेः। अत एव सीरदेवोऽपि इमां परिभाषां लण् इत्यत्र भाष्यकारेण ज्ञापितामुद्घुष्यति ॥ यत्तु—'यत्र अनन्यथासिद्धलक्ष्यनिर्वाहकतया ज्ञापकेन वचनकल्पना; तत्र आवश्यकं स्वांशे चारितार्थ्यकल्पनानुसरणम्। अन्यथा विपरीतकल्पनाया अपि प्रसक्तेः। यत्र च प्रमाणान्तरेण लक्ष्यनिर्वाहेऽपि कथंचित् शास्त्रवैयर्थ्यपरिहारायान्यथासिद्धप्रयोजनस्यैव वचनस्य ज्ञापनं लाघवादाश्रीयते, न तत्र स्वांशे चारितार्थ्यापेक्षा। प्रमाणान्तरविरोधादेव तत्र विपरीतकल्पनाया असंभवात्। अत एव अणुदित्सूत्रस्थस्याप्रत्ययग्रहणस्य भाव्यमानपरिभाषाज्ञापकतापरभाष्यसङ्गतिः। अन्यथा ज्ञापितायां परिभाषायां स्वांशे चारितार्थ्याभावात्तदसङ्गतिः स्पष्टैव' इति वाक्यार्थचन्द्रिकोक्तम्, तदविचारितरमणीयम्। अस्याः परिभाषायाः 'कुमारीब्राह्मणिरूपा, कुमारीगौरितरा, गौरीब्राह्मणितरा' इत्याद्यनन्यथासिद्धलक्ष्यनिर्वाहकतया आवश्यकत्वेन स्वांशे चारितार्थ्यस्य तद्रीत्याप्यवश्यमनुसर्तव्यत्वात्। नात्र प्रमाणान्तरेण लक्ष्यनिर्वाह इति वक्तुं शक्यते। लेखान्ते उत्तरपदे, घञन्ते वा हृदादेशसिद्धये लेखग्रहणस्यावश्यकत्वेन कदापि उक्तलक्ष्यनिर्वाहाभावात्। न हि घञन्तलेखादिग्रहणे प्रमाणान्तरविरोधं पश्यामः। 'ज्याद ईयसः' इत्येव दीर्घे सिद्धे 'ज्यादात्' इति दीर्घोच्चारणस्यैव भाव्यमानपरिभाषाज्ञापकताया उपाध्यायाभिप्रेतत्वेन न तत्र स्वांशे चारितार्थ्यहानिः। भाव्यमानपरिभाषाज्ञापकत्वोपपादनपरं अणुदित्सूत्रस्थं भाष्यमपि न प्रकृतविरोधीत्यन्यदेतत् ॥ यच्च—'परिभाषाघटक 'न हि सन्देहादलक्षणम्' इत्यंशादेव सन्देहात्मकपरिभाषोपस्थापकालिङ्गलाभेऽपि तदंशस्य प्रकृतानुबन्धद्वयोच्चारणरूपयत्नत एव सिद्धौ लाघवाच्चारितार्थ्यमपि सुस्थम्। तस्मात् निरुक्तानुबन्धद्वयोच्चारणं साक्षादेव परिभाषायां ज्ञापकं भवितुमर्हतीति वृथैवायं मूलकृत्प्रयासः' इति वाक्यार्थचन्द्रिकोक्तं तदप्यज्ञानविजृम्भितम्। ज्ञापनोत्तरं पकाराद्यनुबन्धान्तरोच्चारणेन सन्देहात्मकपरिभाषोपस्थापकलिङ्गाभावे स्वांशे चरितार्थ्यस्य वर्षसहस्रेणाप्युपपादयितुमशक्यत्वात्। एवं च प्रकृतपरिभाषायां ज्ञापकं अणादिपदघटितशास्त्रमेवेति न प्रागुक्तं विस्मर्तव्यम्। स्वांशे चारितार्थ्यमपि उपपादितमेव सम्यक्। अनन्यथासिद्धेन गौरीब्राह्मणितरा

इत्यादिलक्ष्यनिर्वहणेन प्रयोजनवती चेयम् । ज्ञापकाश्रयणेन प्रायः सन्देहवारणसंभवेऽपि क्वचिन्न तेन तत्संभवत्येव । तदियमवश्यमङ्गीकर्तव्यैव परिभाषा ॥ यत्तु—'परिभाषाभावे यथा 'ओर्गुणः' इत्यादौ गुणादिपदं व्यर्थं तथा 'उरृत्' इत्यादावपि तपरकरणं स्पष्टार्थं स्यात्, अतः परिभाषाकरणम् । कृतायां तु 'यत्र भाष्यकृता व्याख्यानं कृतं सूत्रतोऽप्यायाति तदेव प्रमाणं न त्वन्यथा' इति बोधनार्थं परिभाषारम्भः' इति गोविन्दोक्तम्, तन्न हृदयंगमम् । 'उत्तरपदाधिकारे—' इति परिभाषायाः व्याख्यानाभावे सूत्रस्थज्ञापकसिद्धत्वाभावेन सूत्रतोऽप्यायातीत्युक्तेः व्याहतत्वात् । प्रत्युत 'लेख' इति घञन्तस्यैव सूत्रतो ग्रहणमापतति । त्वकत्पितृक इत्यादिसिद्धिः सूत्रतोऽप्यायातीति तेन शक्यते न चिरेणापि प्रतिपादयितुम् । 'यथोत्तरं मुनीनां प्रामाण्यम्' इत्येतदपि प्रकृतपरिभाषयैव सिध्यतीति खलु तेनाङ्गीकृतम् । ततश्च कथं प्रमाणीकुर्यात् 'त्वकत्पितृकः' इत्यादिलक्ष्यसिद्धौ इष्टसिद्धिं भगवतः पतञ्जलेः ? एवं च लण्सूत्रीयणकारोच्चारणेन 'यथोत्तरं मुनीनां प्रामाण्यम्' इत्येतदपूर्वं बोध्यते । अणादिपदघटितशास्त्रेण तु व्याख्यानपरिभाषा ज्ञाप्यते इति परैरपरिशीलितः पन्थाः । न हि 'धिन्विकृण्व्योर च' इत्यकारविधानस्य 'यथोत्तरं मुनीनां प्रामाण्यम्' इत्येतदर्थज्ञापकतोपपादनपरेण 'एतच्च 'धिन्विकृण्व्योर च' इति सूत्रे ध्वनितम्' इति सुबन्तशेखरेण विरुध्यते । 'धिन्विकृण्व्योर च' इत्यत्र प्रक्रियालाघवेन लोपे कर्तव्ये अकारविधानं न धातुलोपसूत्रप्रत्याख्यानं भाष्यकृत्कृतं न्याय्य इति ज्ञापयतीति एकदेशानुमत्या सिद्धमिदम् । अत एव 'चजोः कुघिण्यतोः' इत्यत्र 'निष्ठायामनिटः' इति वार्तिकप्राबल्यात् ग्लुञ्च्वादेः णिति कुत्वमेवेति सिद्धम् । अन्यथा 'न कादेः' इति कुत्वनिषेधापत्तिः । एवं च धिन्विकृण्व्योरकारविधानज्ञापितस्य 'यथोत्तरं मुनीनां प्रामाण्यम्' इत्यस्य भाष्यकारादिभिः यत्रार्थे तात्पर्यं बोधितम्, सोऽर्थो मदुक्तिविरुद्धोऽपि महेश्वरोच्चरितणकारबोधितप्राबल्यविशिष्टो ममाप्यभिप्रेत इति तस्य पाणिनिसम्मतिप्रदर्शनपरत्वेनाविरोधात् । एतेन 'यत्तु शेखरकृतोक्तं 'धिन्विकृण्व्योर च' इत्यकारविधानमेतत् ज्ञापकमिति, तन्न; स्वस्य स्वप्रामाण्यबोधकत्वानौचित्यात्' इति रामकृष्णोक्तमपास्तम् । भाष्यकारादिभिः मद्वचसः यत्रार्थे तात्पर्यं बोधितम्, सोऽर्थो ममाभिप्रेत इति यथोत्तरमित्यत्र पाणिनिना 'धिन्विकृण्व्योर च' इति

'[1]अणुदित्सवर्णस्य— ( १ । १ । ६९ । ) इत्येतत्परिहाय पूर्वेण अणुग्र-

---

सूत्रस्थाकारेण स्वसम्मतिरुक्तेति तदुत्तरग्रन्थविरोधात् ॥ तेनेति ॥ व्याख्यानादेवेति नियमाङ्गीकारेणेत्यर्थः ॥ अणुदित्सवर्णस्येत्येतत्परिहायेति ॥ अ इ उ एतदन्यतमत्वावच्छिन्ने अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल एतदन्यतमत्वावच्छिन्ने च शक्तिस्वीकारेणाण्पदबोध्यत्वस्य भेदेन पाक्षिकी प्राप्ति. सुलभा ॥ यदि अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल एतदन्यतमत्वावच्छिन्ने शक्तिं स्वीकुर्वाणः अ इ उ एषां प्राप्तत्वात्कथं पाक्षिकीमप्राप्तिं तेषूपलभेत इत्युच्यते तर्हि अन्यतमत्वस्य तद्भिन्नभिन्नत्वरूपेण अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल एतदन्यतमत्वस्य तद्भिन्नत्वेन घटभेदबुद्धौ पटस्येव तस्यापि तद्भेदबुद्धौ तत्राप्राप्तिरेवेति पाक्षिकाप्राप्तिसंभवात् 'परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ।' इति नियमः व्याख्यानैकसाध्यः । व्याख्यानं च 'अणुदित्सवर्णस्य—' इत्यत्र परेण णकारेण प्रत्याहारे 'उऋत्' इति तपरकरणमूलकं । तपरकरणं हि तत्र 'कृतसंशब्दने' इति धातोः चौरादिकाल्लुङि 'अचीकृतत्' इत्यत्र दीर्घस्थाने ह्रस्व एव यथा स्यादित्येतदर्थम् । यदि पूर्वेणाण्ग्रहणं तर्हि ऋकारस्यानण्त्वात् ग्राहकशास्त्राप्रवृत्त्या दीर्घस्याग्रहणेनास्थानित्वात्तपरकरणवैयर्थ्यं स्पष्टमेव ॥ न च तपरसूत्रेण ऌकारग्रहणार्थं तपरकरणं, तपरसूत्रेऽण्ग्रहणानुवृत्तेरिति शङ्क्यम्; स्थानेन्तरतमपरिभाषया ऋकारस्य स्थाने आन्तर्यतः ऋकार एवेति तद्वारणेन ऌग्रहणे फलाभावात् ॥ अथ उरित्यनेन सावर्ण्यात् ऌवर्णस्यापि ग्रहणात् अन्तरतमपरिभाषया ऋकारस्य ऌकारविधानेन तपरकरणं सार्थकमित्युच्यते तदापि सावर्ण्यसत्त्वेऽपि पूर्वेण ग्रहणे अणुदित्सूत्राप्रवृत्त्या ऋकारेण ऌकारग्रहणायोगः । तपरसूत्रे समानकालासवर्णनिवृत्तये सवर्णपदानुवृत्तेरावश्यकत्वात् । सूत्रकृन्मते ऋकारऌकारयोः सावर्ण्याभावेन विधेयसमर्पकेण ऋकारेण ऌकारग्रहणाप्रसक्तिश्च ॥ न हि 'उपसर्गादृति—' इत्यनेन सूत्रकारमतेऽपि ऋऌवर्णयोः सवर्णसंज्ञा ज्ञाप्यत इति वक्तुं शक्यते; उपेन्द्र इत्यादौ गुणप्रवृ-

---

1. काशीयभाष्यपुस्तके अस्मदीयतालपत्रलिखितभाष्यपुस्तके च 'अणुदित्सवर्णमेक परिहाय पूर्वेणाण्ग्रहणम्, परेणेण्ग्रहणम्' इति पाठो दृश्यते ।

त्तिज्ञापनेन तद्वारितार्थ्यात् ॥ न हि तदपि ज्ञापनं ऋलवर्णयोः सवर्णसंज्ञाज्ञापनद्वारेति युज्यते वक्तुम् । अस्यामवस्थायां पूर्वेण ग्रहणात् अनुवाद्यसमर्पकेण ऋकारेण लकारग्रहणायोगात् स्थानेन्तरतमपरिभाषया वारणेन फलाभावाच्च ॥ न च असंजातविरोधन्यायेनेनान्तरतमपरिभाषाबाधः । तन्न्यायस्य वैयाकरणैरनङ्गीकार्यत्वात् । अत एव उत्सर्गस्य अपवादविषये अप्रवृत्तिः 'अकृत—' इति परिभाषोदाहरणं च संगच्छते ॥ न ह्यण्पदमर्थद्वयतात्पर्येणोच्चरितमित्यनुवाद्यसमर्पकेण लकारग्रहणसंभवः । सुन्दोपसुन्दन्यायेन कस्याप्यर्थस्य बोधानापत्त्या तत्कल्पनस्याप्रामाणिकत्वात् ॥ यदि ऋलवर्णयोः सावर्ण्यमित्यनेन समानजातित्वमेवातिदिश्यत इति पूर्वेण प्रत्याहारेऽपि अनुवाद्यसमर्पकेण लकारग्रहणं संभवतीति लकारग्रहणार्थत्वेनापि तपरकरणं सार्थकमित्युच्यते तदा जातिपक्षे अण्ग्रहणप्रत्याख्यानेनाण्ग्रहणाभावादण्पदार्थनिर्णयज्ञापकत्वव्याख्यासाङ्गत्यापत्तिः । सूत्रकाराभिमतत्वेऽपि जातिपक्षस्य व्यक्तिपक्षाभिप्रायेणैव कृतमण्ग्रहणम् । तत्पक्षे पूर्वेणाण्ग्रहणे लकारग्रहणाप्रवृत्त्या तपरकरणवैयर्थ्यात् ॥ न चैवं भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरकरणाभावे स्थान्यादेशयोः समत्वेन आदेशभूतस्य विधेयत्वाभावेनासमस्यैवादेशस्य विधेयत्वमिति सिद्धान्तादत्राविधीयमान इति निषेधाप्रवृत्तौ ऋकारस्यापि ग्रहणे अचीकृतत् इति रूपासिद्धेः ॥ न चाणुदित्सूत्रप्रवृत्तौ उद्देश्यवाचकपदेन ह्रस्वदीर्घयोः ग्रहणेऽपि विधेयवाचकपदे 'प्रकल्प्य—' इति न्यायेन तदप्रवृत्त्या सवर्णग्रहणस्य दौर्लभ्येन सवर्णग्रहणानन्तरं सवर्णानामुपस्थितावन्तरतमपरिभाषया ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ इति आदेशान्तरनिवृत्त्यर्थकतया स्वरूपाभ्यनुज्ञार्थत्वादपूर्वबोध्यत्वाभावेन विधेयत्वं दुरुपपादमिति स्थानिस्वरूपविजातीयरूपनिष्पादकत्वेन भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तिर्दुर्वारेति शङ्कयम्; अणुदित्सूत्रप्रवृत्त्यभावे अपूर्वबोध्यत्वेन भाव्यमानता। भाव्यमानत्वज्ञानोत्तरं चाणुदित्सूत्रप्रवृत्त्यभावः इति अन्योन्याश्रयेण तत्र भाव्यमानत्वस्यैव दुर्ज्ञेयतया निषेधायोगात्सवर्णग्रहणसंभवेन विधेयवाचकपदेऽपि ह्रस्वदीर्घयोर्ग्रहणेनान्तरतम्यात् ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ इति आदेशान्तरनिवर्तकतया स्वरूपाभ्यनुज्ञार्थत्वादपूर्वबोध्यत्वाभावेनाविधेयत्वात् । तपरकरणे कृते तु अतत्कालव्यावृत्त्या षण्णामेव ग्रहणाद्विषमत्वमादेशस्येति विधेयत्वं सुलभम् ॥ यदि ऋकारलकारयोः

समाहारद्वन्द्वे एकत्वेन नपुंसकह्रस्वत्वेन च 'उर्ऋत्' इति निर्देशे दीर्घस्यापि स्थानित्वम्। नुमागमाभावस्तु सौत्रत्वात् इति दीर्घऋकारस्थाने ह्रस्व-ऋकारविधाने विषमत्वादादेशस्यापूर्वबोध्यत्वेन विधेयत्वमिति भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेः तद्वैयर्थ्यं दुर्वारमिति वक्तुमाशंसेत, तर्हि स वक्तव्यः समाहारद्वन्द्वे नपुंसकस्य दीर्घयोः प्राप्तयोः निमित्तानपेक्षत्वेनान्तरङ्गत्वात्प्रथमं नपुंसकह्रस्वे प्रवृत्ते ततः सवर्णदीर्घे रूपासिद्धे॥ न च ह्रस्वोपधेषु अन्तरतमपरिभाषया दीर्घाप्राप्त्या दीर्घोपधेष्वन्तरङ्गत्वादित्वेनास्यैव बाधनादित्वप्राप्त्या तद्व्यावृत्त्यसंभवः; बाध्यसामान्यचिन्तया दीर्घोपधेष्वपि इत्वबाधेनास्य प्रवृत्त्या आन्तरतम्याद्दीर्घस्य दीर्घप्राप्त्या तद्वारणाय तस्य चारितार्थ्यात्॥ न हि बाध्यसामन्यस्यपि ज्ञापितव्याख्यानाधीनत्वेन तदङ्गीकारेण ज्ञापितत्वापेक्षया अणुदित्सूत्र एव व्याख्यानेन निर्वाहे क्लेशायोगः। तपरकरणस्यैव 'यावता विना—' इति न्यायेन बाध्यसामान्येऽपि मानत्वादित्यलं पल्लवितेन॥ परेणाण्ग्रहणे, पितॄणां ऋषभः पितृषभः, पितॄणां ऋद्धिः पितृद्धिः, भवित्री, गम्लेत्यादौ 'गुरोः—' इति प्लुतः 'झरो झरि—' इति लोपः 'अनचि च' इति द्वित्वनिषेधादि च न। ऋलक्सूत्रे लकारग्रहणेन ऋलवर्णयोः पृथगनुबन्धकरणेन च रेफवता लकारवता च सवर्णग्रहणस्य कचिदभावबोधनात्। अत एव क्लृ३प्तशिखेत्यत्र 'अनृत' इति निषेधो न। अत एव च ऋदित्वलृदित्वप्रयुक्तकार्ययोर्न साङ्कर्यम्। रलयोस्तद्वत्त्वं च व्यपदेशिवद्भावेन। अत एव 'नाज्झलौ' इत्यस्य प्रत्याख्यानेऽपि न फलभेद इति बोध्यम्॥ अत्रायमनुमानप्रयोगः— अणुदित्सूत्रम्, लण्सूत्रीयणकारघटिताण्पदघटितम्, 'उर्ऋत्' सूत्रविधेयऋकारसवर्णव्यावृत्तिफलकतपरकरणव्यावर्त्यदीर्घग्राहकत्वात्, यन्नैवं तन्नैवम्। लण्सूत्रीयणकारघटिताण्पदघटितत्वव्याप्य-उर्ऋत्सूत्रविधेयऋकारसवर्णव्यावृत्तिफलकतपरकरणव्यावृत्त्यदीर्घग्राहकत्ववदणुदित्सूत्रमित्याकारकपरामर्शेन अणुदित्सूत्रं लण्सूत्रीयणकारघटिताण्पदघटितमित्यनुमितिर्जायते। तद्विषयतया च लण्सूत्रे लण्सूत्रीयणकारघटिताण्पदघटितत्वं सिध्यति। एवमन्यत्राप्यूह्यम्॥ 'उपसर्गादृति' इति तपरकरणं न तु ज्ञापकं, लृकारग्रहणेन चारितार्थ्यात्॥ न च परेणाण्ग्रहणमिति बोधनेनाणुदित्सूत्रप्रवृत्तेः प्रसक्तेऽष्टादशानां ग्रहणे तपरसूत्रप्रवृत्त्या तद्बाधकल्पनेन

हणं परेण इण्ग्रहणम्’ इति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

---

तपरकरणस्यापि ज्ञापकत्वं सूपपादमिति शङ्क्यम्; विधायकत्वपक्षे अण्ग्रहणाननुवृत्तेस्तपरसूत्रे सिद्धान्तितत्वेन पूर्वेण प्रत्याहारेऽपि ऌकारग्रहणार्थत्वेन तपरकरणस्य चारितार्थ्यात्। विधायकत्वमेव युक्तं व्यक्तिपक्षे। विधिनियमसंभवे विधेरेव ज्यायस्त्वात्॥ यदि तपरस्य ‘अतः’ इत्यादेः सवर्णसमकालप्रसिद्ध्या दोषवारणाय व्यक्तिपक्षेऽपि अण्ग्रहणानुवृत्तिरावश्यकी। अनुवृत्तौ तु तपरः स्वघटकाण्सवर्णसमकालग्राहक इत्यर्थेनादोष इति पूर्वेण प्रत्याहारे ऋकारस्याण्त्वाभावात् तेन ऌकारग्रहणं संभवतीति ‘उपसर्गादृति—’ इति तपरकरणस्य परेण प्रत्याहारे ज्ञापकत्वं सुस्थमेवेत्युच्येत, तदा ‘वृद्धिरादैच्’ ‘अदेङ्गुणः’ इत्यादौ तपरकरणम् एओङ्सूत्रस्थं भाष्यं च प्रमाणीकुर्वाणः तपरशब्दबोध्यो वर्णः स्वसमकालग्राहक इत्यर्थमाश्रित्याण्ग्रहणाननुवृत्तौ दोषाभावात् ऋकारेण ऌकारग्रहणं संभवतीति सार्थक्यं तपरकरणस्य जानाति॥ नापीदं उच्चरितस्यैव प्रत्यायकत्वादसंगतम्, तपरशब्दः स्वबोध्यसमकालग्राहको भवतीत्यर्थकरणेनादोषात्॥ न चैवमपि तपरैच्छब्दबोध्यत्वस्य प्लुतेऽपि सत्वात्तत्समकालग्रहणं दुर्वारमिति शङ्क्यम्; तपरशब्दः स्वबोध्यसवर्णो यः तपरवर्णसमकालो वर्णः तस्य ग्राहक इत्यर्थेन प्लुतस्य तपरशब्दबोध्यत्वेऽपि तपरैकारवर्णसमकालत्वाभावेन न तत्सवर्णग्रहणमित्यविरोधात्। अधिकमस्मत्कृतशब्देन्दुशेखरव्याख्यायां शब्देन्दुमरीचिमालायां प्रपञ्चितम्॥ पूर्वेणेति॥ ‘उरण्रपरः’ इत्यत्र अण् पूर्वेणैव, अण्ग्रहणसामर्थ्यात्। अन्यथा ‘उरच्’ इत्येव ब्रूयात्॥ न हि रादिसंग्रहार्थमण्ग्रहणम्। फलं तु ‘इको यण्—’ इति ऋस्थाने रस्य रपरत्वे धात्रंश इत्यत्र रद्वयश्रवणमिति वक्तुं युज्यते; ‘रोरि’ इति लोपे तत्र एकस्यैव श्रवणेन फलाभावात्। लद्वयं तु लाकृतिरित्यत्र न भवति। संयोगान्तलोपात्। गम्लादेस्त्वभिधाने भाष्याननुग्रह एव। ‘अणोऽप्रगृह्यस्य—’ इत्यत्रापि अप्रगृह्यस्येति पर्युदासेन अच एव कार्यसिद्धौ सामर्थ्यात्पूर्वेणैवेति सिध्यति। अनुनासिकयोग्यहलां तु अनभिधानमुक्तं शेखरे। ‘केऽणः’ इत्यात्रापि परेणाण्ग्रहणे हलो ह्रस्वासंभवेन

'अचश्च' इत्यनेनैवाक्षु सिद्धेः सामाध्यात्पूर्वेणैवेति निश्चीयते ॥ न हि 'अचश्च' इत्यस्य बाधेन हलोऽपि ह्रस्वः; तत्फल तु श्वलिट्कः, मधुलिट्कः, इत्यत्र ह्रस्वसिद्धिरिति वक्तुं युज्यते । यद्येतत्प्रयोजनं स्यात्तदा हयवरटष्टकारेण प्रत्याहरेत् 'केऽटः' इति । तस्मात् यदण्ग्रहणं कृतं ततो विज्ञायते पूर्वेणैव णकारेण प्रत्याहार इति । एवं 'ढ्रलोपे पूर्वस्य—' इत्यत्रापि पूर्वेणैव, परेणाण्ग्रहणे हलो दीर्घासंभवेन 'अचश्च' इति परिभाषयैवाक्षु सिद्ध्या व्यर्थं सत् पूर्वेण प्रत्याहार इति बोधयति ॥ अथेदमुच्यते— 'अचश्च' इति परिभाषाबाधेनानचोऽप्यणो हलो दीर्घः स्यादित्यण्ग्रहणम्, फलं तु वृहूधातोः तृचि तुमुन्प्रत्यये चेडागमाभावे वर्ढा वर्ढुमित्यादौ दीर्घप्रवृत्तिरिति । तत्र ब्रूमः— दीर्घोत्तरमाद्गुणे रपरत्वे च वर्ढा वर्ढुमित्येव रूपमिति ॥ न हि परेण प्रत्याहरणादेव आद्गुणबाधः कल्प्यत इति वक्तुं युज्यते । ढत्वादेरसिद्धत्वेन वार्णपरिभाषया गुणात्पूर्वं 'उपधायाश्च' इतीत्वापत्तेः ॥ न चाण्ग्रहणेन निस्तारः; गर्हधातोः बल्हधातोश्च यङ्लुकि जागल्ढि बावल्ढि इत्यत्र लस्थाने दीर्घार्थमण्ग्रहणस्यावश्यकत्वात् । यङ्लुकः छान्दसत्वेऽपि उक्तधातुभ्यां क्तिनि 'तितुत्र—' इति इण्निषेधे गल्ढिः वल्ढिः इत्यत्र दीर्घसंपादनाय च आवश्यकमण्ग्रहणम् ॥ यदाहात्र सर्वमङ्गलाकारः 'तत्राप्याद्गुणेनादोषात्' इति; स परं प्रष्टव्यः गल्ढिः वल्ढिरित्यत्र दीर्घो भवन् ऋकार एव स्यात्, न तु ईषत्स्पृष्टः । तस्य ह्रस्वऋकारलृकारयोः स्थान एव साधुत्वस्य शेखरोक्तत्वात् । अत एव गमॄनित्यत्र ऋकारो दीर्घः । एवं च तत्राद्गुणे रपरत्वमेव स्यादिति रूपासिद्धिर्दोषः केन वा वार्यतामिति ॥ वयं तु ब्रूमः— अण्ग्रहणसामर्थ्यात् 'अचश्च' इति परिभाषाबाधो वा पूर्वेण प्रत्याहारो वेति संशये 'अबाधेन' इति न्यायेन पूर्वेण प्रत्याहार इत्येव सरणिर्ज्यायसी, इति दिक् ॥ **परेणेण्ग्रहणमिति** ॥ अत एव 'अचिश्नु—' इति सूत्रे 'य्वोः' इत्युक्तम् । अन्यथा इण इत्येव ब्रूयात् ॥ न हि प्रत्याहारफलं वर्णद्वयमेवोपलभमानः पृथगुपादान एव लाघवं मन्यते । अत एव 'कृञ्चानुप्रयुज्यते—' इत्यत्र कृञ् इति प्रत्याहारे सामर्थ्यमाश्रयन् अस्तेर्भूभावाभावं पश्यति । ततश्च 'य्वोः' इति कथं भवतु ज्ञापकमिति युज्यते वक्तुम् । 'कृञ्चानुप्रयुज्यते—' इत्यत्र व्यवहितसूत्रान्तरस्थवर्णेन प्रत्याहारः कृञोऽनुप्रयोगस्येति ज्ञापकाश्रयणमनेकेषां तन्मध्यपतितानां प-

**तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—**

---

रित्यागः संपदेर्धातुत्वेऽपि अनुगुणार्थत्वाभावाच्चग्रहणमित्यादिक्लेशेन प्रत्याहाराश्रयणे सामर्थ्यमुपपद्यते। नैवमेतत्। अत एव 'वृद्धिरादैच्' 'अदेङ्गुणः' इत्यादौ वर्णद्वयबोधकाः ऐजादिप्रत्याहाराः उपपद्यन्त इति बोध्यम्॥ **भाष्ये स्पष्टमिति**॥ अनेन अस्या ज्ञापकसिद्धत्वम् 'एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा' इति भाष्येणैव प्रतिपादितमित्यवगन्तव्यमिति सर्वमवदातम्॥

अथ पूर्वपरिभाषायाः संशयास्कन्दिताणादिपदघटितशास्त्रार्थनिर्णायकत्वेन अणपदघटितस्याणुदित्सूत्रस्य शक्तिग्राहकत्वेन संज्ञाशास्त्रस्योपस्थितौ तस्य च कार्यकालपक्षे 'अ अ' इति सूत्रे निष्कम्पं प्रवृत्त्या 'मालाति'[1] इत्यादौ आकारस्य ह्रस्वावर्णापत्तिरिति तद्वारणाय यथोद्देशपक्षस्यावश्याश्रयणीयत्वेन प्रसङ्गसङ्गत्योपस्थितं 'ज्ञापकन्यायसिद्धानि' इति प्रतिज्ञानुरोधेन ज्ञापकसिद्धपरिभाषानिरूपणानन्तरं न्यायसिद्धत्वेन निरूपयितुं प्रस्तुतं सर्वपरिभाषासाधारण्येन पक्षद्वयबोधकत्वाद्व्यापकं च यथोद्देशकार्यकालपरिभाषाद्वयं क्रमेण व्याख्यातुमुपक्रममाणः प्रतिसंज्ञापरिभाषं पक्षद्वयं प्राप्नोतीति शङ्कामपाकुर्वाणस्तत्र प्रथमं यथोद्देशपरिभाषां व्याचष्टे— **तत्रेति**॥ शास्त्र इत्यर्थः; पूर्वमलक्षणमित्यनेनोपस्थितत्वात्। शास्त्रं च प्रकृतं व्याकरणमेव। एवं चैतद्ग्रन्थीयव्याख्यास्यमानपरिभाषाविषय एव पक्षद्वयम्, न तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यादाविति संभावनाया नावकाश इति बोध्यम्। अत्र च सप्तम्याः वृत्तिमत्त्वमर्थः। पक्षद्वयमित्यनेन तस्यान्वयः॥ किंविषये पक्षद्वयमित्याह— **संज्ञापरिभाषाविषय इति**॥ संज्ञापरिभाषयोर्विषय इति इतरेतरयोगः। न हि 'जातिरप्राणिनाम्' इत्यस्य प्रवृत्तिः, जातिप्राधान्ये खलु तत्प्रवर्तते; इह तु व्यक्तिप्राधान्यमित्यदोषात्। संज्ञापरिभाषाप्रयोज्यविध्युपकारविषय इत्यर्थः॥ **पक्षद्वयमिति**॥ पक्षद्वयबोधकमित्यर्थः॥ **इतिः हेतौ**; यतः संज्ञापरिभाषाप्रयोज्यविध्युपकारविषये व्याकरणशास्त्रवृत्तिपक्षद्वयबोधकं परिभाषाद्वयं ततस्तदाहेति फलितोऽर्थः। त-

---

1. 'अ अ' इति सूत्रस्थ भाष्य तु, एकदेशयुक्तिः। अद इति न्यासस्याकरणात्, एकशेषसूत्रस्य प्रत्याख्यानाच्च, व्यवस्थितेनैव यथोद्देशपक्षेण निर्वाहे उपायान्तरानुभावनस्यानावश्यकत्वाच्च।

# यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥

---

तत्र शास्त्रत्वावच्छेदेन पक्षद्वयस्वीकारात् क्वचित् यथोद्देश', क्वचित् कार्यकालः, इति सिद्धम् ॥ यत्तु— क्वचिदुभयमिति गोविन्दादयः, तन्न विचारसहम्; अन्यतरपक्षेणैव निर्वाहे पक्षद्वयाश्रयणस्यानावश्यकत्वात्; 'पक्षान्तरैरपि परिहारा भवन्ति' इति ऋलृक्सूत्रस्थभाष्यसिद्धान्तव्याकोपापत्तेश्च । 'न हि व्यवस्थितयोः पक्षयोः अन्यतरेण लक्ष्ये सिद्धे पक्षान्तरेण शङ्काऽप्युचितेत्यर्थस्य प्रगृह्यसंज्ञाप्रकरणे भाष्ये ध्वनितत्वात्' इति अर्थवत्सूत्रस्थशब्दरत्नविरोधाच्च; एकत्रोभयस्मिन् लक्ष्यसाधनरूपस्य प्रयोजनस्य कुत्राप्यसंभवाच्च । प्रगृह्यसंज्ञाविषये सत्यपि शास्त्रभेदे संज्ञाभेदाभावात्कार्यकालपक्षः केवलमाश्रयणीयः । अन्यथा 'प्लुतः प्रगृह्या अचि—' इत्यत्र 'ईदूदेत्—' इति संज्ञाशास्त्रविषये यथोद्देशपक्षाश्रयणात् प्रगृह्यपदशक्तिग्रहेण पदपदार्थोपस्थित्या वाक्यार्थबोधस्य सुलभतया 'अदसो मात्' इति शास्त्रस्य कार्यकालपक्षाश्रयणे विधिसूत्रस्थप्रगृह्यपदस्य स्वशक्तिग्राहकशास्त्राकाङ्क्षाभावेन विधिना संज्ञाशास्त्रैकवाक्यतैव न स्यात्; एवं 'अणोऽप्रगृह्यस्य—' इत्यत्रापि कार्यकालपक्षे तत्तद्विधिलक्ष्यासिद्धिर्दुर्वारा स्यात् । तस्मात् एकसंज्ञाविषये शास्त्रभेदेऽपि संज्ञाभेदाभावात् एक एव पक्ष आश्रयणीय इति 'ईदूदेत्—' इति शास्त्रस्यापि 'अदसो मात्' इति शास्त्रवत् कार्यकालत्वमेवाङ्गीकर्तव्यम् । 'ईदूदेत्—' इत्यस्य कार्यकालपक्षाङ्गीकारे प्लुतस्य प्रगृह्यत्वसिद्धये एव 'प्लुतात्पूर्वं दीर्घोऽपि प्रश्लिष्यते' इत्यभिहितम् । अत एव 'अदसो मात्' इत्यत्रापि ईदूत्सूत्रवत् यथोद्देशपक्षाश्रयणे 'अदसो न' इति न्यासेन समाधानान्तरमुक्तं भाष्ये । स्पष्टं चेदमस्मदाचार्यपादप्रणीते परिभाषेन्दुशेखरभूषणे । एवं च सति व्यवस्थितयोः पक्षयोरनयोरन्यतरपक्षेण लक्ष्यनिर्वाहे पक्षद्वयाश्रयणं विफलम् । अतोऽनुचितमिति 'क्वचिच्चोभयपक्षः' इत्युक्तिः यागेश्वरादीनामज्ञानविजृम्भितैवेति विभावयन्तु विद्वांसः ॥

संज्ञापरिभाषमिति समाहारद्वन्द्वः । शक्तिग्राहकं शास्त्रं संज्ञाशास्त्रम् । पक्षप्राप्तार्थानुवादकत्वे सति लिङ्गचिह्नितं अर्थान्तरनिवृत्त्यर्थकं परिभाषाशास्त्रम् । ते च अष्टाध्यायीस्थानुपूर्वीघटकपौर्वापर्यव्यवहारप्रयोजकत्वघटितस-

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देशः उपदेशदेशः । आधि-

---

श्रिवेशघटकावकाशातिक्रमविरहविशिष्टे अन्यत्र सर्वत्र शास्त्रे स्ववाक्यार्थबोधस्मरणेन लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगितत्तच्छास्त्रीयवाक्यार्थबोधं जनयतः । 'पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणं । सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किंचन' इति पराशरोपपुराणपर्यालोचनया 'वर्णेनाप्यनर्थकेन न भवितव्यं कि पुनरियता सूत्रेण' इति वृद्धिसूत्रस्थभाष्यबोधितशास्त्रवैयर्थ्यनिराकरणेन च शास्त्रत्वेन प्रयोजनवत्त्वं निर्णीय प्रयोजनविशेषानिर्णयेऽपि यथाश्रुतग्राहिणः परितोष इति स्थितिः ॥ ननु अव्युत्पन्नस्य यथाशब्दस्य वीप्साबोधकत्वेन उद्देशपदस्य उपदेशपर्यायत्वेन च करणे घञा प्रतिशास्त्रं संज्ञापरिभाषमित्यर्थे 'कार्यकालं संज्ञापरिभाषम्' इति द्वितीयपरिभाषानुत्थितिरेवेत्यत आह— उद्देशमनतिक्रम्येति ॥ अविहायेत्यर्थः । विधिवाक्यार्थबोधं जनयतीति शेषः, एवं च क्त्वोपपन्नः ॥ यत्तु— 'स्वार्थं बोधयति इति शेषः' इति सर्वमङ्गलाकारः, तदसत्; स्वदेशानातिक्रमणस्य स्वार्थबोधं प्रति हेतुत्वप्रतिपादनस्य शशविषाणपर्यायत्वात्, पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावेन स्वदेशातिक्रमात्पूर्वं स्वार्थबोधने बाधकाभावेन तदर्थं परिभाषारम्भस्य काकदन्तपरीक्षाकुक्षिप्रवेशापत्तेश्च ॥ यदपि— 'स्वदेशसम्बन्धध्वंसप्रागभावकालिकः स्वार्थबोधः' इति तस्यैव प्रलपनम्, तदप्यसङ्गतम्; यथोद्देशपक्षे स्वदेशसंबन्धध्वंसस्य सिद्धान्तविरुद्धत्वात्, यदा भवति ध्वंसः तत्पूर्वक्षण एव खलु प्रतिपादनीयस्तत्प्रागभावः ॥ यत्तु— 'वर्तत इति शेषः' इति गोविन्दादयः, तदविचारितरमणीयम्; स्वदेशातिक्रमविरहेण वर्तनस्य प्रतिपादनाय परिभाषारम्भस्य वैयर्थ्यात्, स्वदेशसंबन्धध्वंसविरहेणैव वर्तनसिद्धया तत्क्रियाध्याहारस्यानौचित्याच्च, स्वदेशसंबन्धध्वंसविरहेण विधिवाक्यार्थबोधजनकत्वस्य एतावताऽप्यनापत्तेश्च ॥ 'परावरयोगे च' इति क्त्वा, परावरत्वं च बौद्धम् । 'समानकर्तृकयोः—' इत्यस्य तु न प्राप्तिः, पूर्वकालिकत्वाभावात् । 'यथा सादृश्ये' इत्यव्ययीभावः । उपदेशदेशातिक्रमविरहविशिष्टमिति यावत् ॥ ननु भावघञन्तयोरुपदेशोद्देशपदयोः स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वस्वप्रकारकप्रत्यक्षानुकूलत्वोभयसंबन्धेन

S. Kuppuswami Sastri Ag. Professor of Sanskrit & Comparative Philology, Presidency College, Madras — I have perused some portions of the work ... NAGESASAYA NIRNAYA by Brahma Sri R. Narayanasastrial of the Tiruvadi Sanskrit College. This work is a learned commentary on the famous treatise called Paribhashendusekhara by Nagesa Bhatta. The author proposes to critically examine in this commentary the various interpretations given by other commentators on Paribhashendusekhara. I see that this commentary has already met with the approbation of some eminent Vyakaranas like Mahamahopadhyaya Subbaya ... From the portions I have seen, I can confidently say that Mr. Sastrial's commentary when published will hold a prominent place in the ... relating to the Vyakarana Sastra. Mr. Sastrial's work in this direction deserves encouragement.

---

# NEW PUBLICATIONS.

*

***Sastra Darpana*** by Sri Amalananda, the author of Kalpataru. This is a masterly treatise on the Brahmasutras consisting of splendid lectures on each Adhikarana. Crown 8vo pp 369. Cloth Gilt ***Rs. 2-8-0.***

***Taittiriyopanishad Bhashya*** with the commentary called **Vanamala** by Sri Achyuta Krishnananda Tirtha. This precious commentary is quite invaluable to a right understanding of the Bhashya of Sri Sankara. Royal 8vo pp. 270. Price ***Rs. 3.***

***Bhagavad Gita*** with the commentary called **Brahmanandagiri** by Sri Venkatanatha. An excellent Advaitic Commentary far superior in every respect to all others published hitherto. The author seems to have been very learned with his critical faculties fully developed. Crown 8vo. pp. 614. Price ***Rs. 3.***

THE MANAGER,

Bookselling Depatment,

SRI VANI VILAS PRESS

**SRIRANGAM,** (Madaas Presidency, S. India.)

# OPINIONS

**The Honorable Mr. V. Krishnaswamy Iyer. C. S. I.**— **Brahma Sree R. Narayana Sastrial is a pundit of rare ability. He has a profound knowledge of Vyakarana His powers of versification are high and his compositions are singularly free from the defects of modern pundits. His character is very good. In my opinion he deserves the patronage of all lovers of Sanskrit.**

**तिरुविशनल्लूर महामहोपाध्याय श्रीरामसुब्रह्मण्यशास्त्रिणः—**

भाष्ये पातञ्जले यन्मतिरतिनिपुणा शेखरे ग्रन्थवर्ये
काव्यालङ्कारवर्गे बहुविधरचना यस्य सम्यक् प्रसिद्धा ।
द्राक्षापाको यदीये वचसि सुमधुरे नन्दनीयः कवीन्द्रः
सोऽयं नारायणाख्यो मम मुदमतनोद्रामसुब्बोर्वचोभिः ॥

नागेशाशयनिर्णयसमाह्वयस्तेन निर्मितो ग्रन्थः ।
दृष्टोऽयमेक एव प्रभवति नागेशहृदयनिर्णीतौ ॥

**पञ्चनदक्षेत्रवास्तव्यवैयाकरणवर्य महामहोपाध्याय श्रीमुण्णसुब्बरायाचार्याः—** चोलमण्डलमण्डलायमानराधामङ्गलग्रामाभिजनेन सरसकविताचतुरेण वैयाकरणश्रेष्ठेन नारायणशास्त्रिणा प्रणीतं नागेशाशयनिर्णयाभिधानं परिभाषेन्दुशेखरव्याख्यानमवलोक्य एवं मन्येऽहम् । यद्यपि पण्डितवरैः प्रणीतानि परिभाषेन्दुशेखरव्याख्यानानि सन्ति, तथापि अत्र उल्लिखिता अनेके नवीना विषयाः तेषु नोपलभ्यन्ते । किं च प्रायो व्याख्यानानि मूलखण्डनपराण्येव दृश्यन्ते । इदं तु तत्खण्डनस्य अलग्नकतां प्रदर्श्य मूलाशयवर्णनेन मूलार्थस्य दार्ढ्यं स्थापयति । एवमादयो बहवो गुणा उपलभ्यन्ते । तस्मादवश्यमुपादेयमिति ॥

**पुदुक्कोट्टै राजस्थानदानाधिकारिणः पुदुप्रहारं श्रीगोपालशास्त्रिणः—**

नागेशाशयनिर्णयभूषितभूषणविराजितो जयति ।
खण्डिततदाघकलापो मुनिपरिभाषेन्दुशेखरो नाम ॥

मन्निकटाच्चिरकालं गृहीतविद्यः कवीश्वरः प्रथते ।
नागेशाशयनिर्णयविधिना नारायणाभिधः शास्त्री ॥

मत्कृतभूषणविवरणनागेशाशयविनिर्णयं वीक्ष्य ।
नानाखण्डनविस्तृतीर्जाता बेलेति निन्दतु मन्ये ॥

नवसालपुराधीशश्रीमन्मार्ताण्डभूपतेः ।
दानाधिकारी गोपालशास्त्रीत्थं बह्वमन्यत ॥

करणसाधनश्चायम् । यत्र देशे उपदिश्यते तद्देशे एव वाक्यार्थबोधेन गृहीत-

धर्मविशिष्टव्यापाररूपं प्रत्यक्षमाख्यानमुपदेशः । यथा लोके यत्र कर्णं गृहीत्वा अयं गौरिति बोधयति, तत्र कर्णग्रहणरूपव्यापारे उक्तोभयसंबन्धेन गोत्व-वैशिष्ट्यस्य सत्वात् तत्र प्रत्यक्षमाख्यानमिति, उपदिष्टो मे गौरिति व्यवहारः । यत्र तु सास्नादिमान् गौः इत्युच्चार्य गां बोधयति, तत्र उच्चारणव्यापारस्य गो-त्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वेऽपि तत्प्रकारकप्रत्यक्षाननुकूलत्वान्न तत्रोपदेशपदव्यवहारः, किंतु प्रत्यक्षविषयतावच्छेदकधर्मपुरस्कारेण बोधनरूपं गुणैः प्रमाणमिति उद्देशस्यैव व्यवहार इति भेदेनोपादानदर्शनात्, 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति वार्त्तिकस्वारस्याच्च, उद्देशोपदेशयोः भेद एवेति कथमिष्टार्थसिद्धिरित्यत आह— उद्देशश्चोपदेशेति ॥ ननु भावघञन्तत्वात् उपदेशपदस्य इष्टार्थासिद्धिरेवेत्यत आह— देश इति ॥ तर्हि कस्मिन्नर्थे घ-ञित्यत आह— अधिकरणसाधनश्चायामिति ॥ साध्यते साधुत्वेन प्रतिपाद्यते प्रकृतिप्रत्ययादिः अस्मिन्निति साधनमर्थः । अर्थविशेषावलम्बनेनैव साधुत्वनि-र्णयात् । अधिकरणं साधनं यस्येति व्युत्पत्त्या अधिकरणार्थक इत्यर्थः । अधिक-रणार्थे ज्ञात्वैव घञ् प्रयुज्यत इति भावः । अत एव 'अचः परस्मिन्—' इति सूत्रे भाष्ये 'भावसाधनः' इत्युक्तम् । 'साधनं कृता' इत्यादौ च अगत्या सा-धनशब्दः कारकपरोऽपीत्यन्यदेतत् । बाहुलकादत्र अधिकरणे घञिति बोध्यम् ॥ अयमिति ॥ उद्देशशब्द इत्यर्थः । उत्, उप, इत्युपसर्गभेदेऽपि 'इषेत्वकमधी-ष्व' इति गुरुणा कथिते 'उद्दिष्टो मेऽनुवाकः' इति शिष्येण प्रतिवचनदानादु-त्पूर्वकदिशिः उच्चारणार्थकः प्रयुज्यत इति उद्दिश्यते उच्चार्यते अस्मिन्निति उच्चार-णाधिकरणमित्यर्थः फलतीति भावः । ननु देशभेदेन गुणप्रधानशास्त्रयोः वाक्या-र्थबोधे कथं उपकार्योपकारकभावप्रसक्तिः इत्यत आह— यत्रेति । यच्छब्दस्य देशत्वेन कालबोधकत्वेऽपि कालत्वेन कालबोधकत्वाभावान्नदाप्रत्ययः । अत एव 'यत्र काले त्वनावृत्तिः' इत्यादिप्रयोगः संगच्छते । अष्टाध्यायीस्थानुपूर्वीघट-कपौर्वापर्यव्यवहारप्रयोजकसंनिवेशघटकावकाश इत्यर्थः ॥ तद्देश एवेति ॥ पठितानां पाठदेशे ज्ञापितानां ज्ञापकदेशे चेत्यर्थः; एतेन विधिदेशव्यावृत्तिः ॥ वाक्यार्थबोधेनेति । अस्य गृहीतशक्त्या गृहीतपरिभाषार्थेन इत्युभयत्राप्यन्वयः ॥

शक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः । देशश्च उच्चारण-

---

गृहीतशक्त्येति । कर्मधारयसमासोऽत्र बोध्यः । इदं संज्ञास्थले । स्मरणं प्रत्यनुभवस्य कारणत्वोपपत्तये मध्ये व्यापारः संस्काराख्य आत्मन्यङ्गीक्रियते, तस्य च आत्मनि सर्वदा सत्त्वात्सर्वदा स्मरणवारणाय उद्बुद्धसंस्कारस्यैव स्मरणं प्रति कारणत्वमिति परमङ्गीकर्तव्यम् । तदुक्तं तत्त्वबिन्दौ वाचस्पतिमिश्रैः ' पटुभ्यासादरप्रत्ययाहिता हि भावना प्रबोधवती स्मृतिहेतुः ' इति । उद्बुद्धसंस्कारः स्मृतिहेतुः इति तदर्थः । उद्बोधकं च एकसंबन्धिज्ञानादिकम् । उद्बोधकैकसंबन्धिज्ञानादिसत्त्वेऽपि कुत्रचित्स्मरणादर्शनात् दृढतरसंस्कारस्य स्मरणं प्रति कारणत्वमित्यङ्गीकर्तव्यम् । दृढतरसंस्कारोत्पत्तिं प्रतिच अपेक्षाबुद्धेः कारणत्वम् । अपेक्षात्मकश्च प्रत्ययः, पटुः, अभ्यासः, आदरश्चेति नैयायिकैस्त्रिधा विभज्यते। आद्यो यथा— अनवहितचित्तस्याप्यद्भुतादिदर्शने । द्वितीयो यथा— खण्डिकाध्ययनादौ । तृतीयो यथा— अवहितचित्तस्य क्षुद्रवस्तुवीक्षणे । तथा च ' वृद्धिरादैच् ' इत्यादौ वृद्धिपदस्य आदैचा सह तादात्म्यदर्शनात् वृद्धिपदस्य आदैज्रूपोऽर्थः, अतस्तत्र शक्तिर्गृह्यत इति संज्ञाशास्त्रजन्यवाक्यार्थबोधरूपशक्त्यनुभवोपोद्बलितेन आदरात्मकेन संस्काराधायकेन प्रत्ययेनैव ' वृद्धिरेचि ' इत्यादौ वृद्धिपदश्रवणे ' एकसंबन्धिज्ञान— ' इति विधया तत्तत्साङ्केतिकविधिशास्त्रघटकपदानुभवोद्बुद्धेनोपस्थितिशाब्दबोधयोर्निर्वाहे ' यन्नदुःखेन ' इत्यनेन स्वःपदशक्तिग्रहे वृत्ते ' स्वाराज्यकामो यजेत ' इत्यादावर्थोपस्थितिवत् ' वृद्धिरेचि ' इत्यादौ आदैचामुपस्थितिर्भवतीति विधिदेशे पुनरेतत्प्रतिसंधानस्य नोपयोग इति भावः ॥ गृहीतपरिभाषार्थेनेति ॥ अत्रापि कर्मधारयः । इदं परिभाषास्थले । ' तस्मिन्निति निर्दिष्टे पूर्वस्य ' इत्यादौ परिभाषाशास्त्रे वाक्यार्थबोधोत्तरं सप्तमीनिर्देशादिलिङ्गेन ' इको यणचि ' इत्यादौ स्मरणेन परिभाषार्थो गृह्यते, स एव गृहीतपरिभाषार्थः तेनेत्यर्थः ॥ सर्वत्र शास्त्रे इति । सर्वविधिशास्त्रेष्वित्यर्थः ॥ व्यवहार इति । उपकारकत्वव्यवहार इत्यर्थः । अवच्छेदकावच्छेदेन संज्ञाशास्त्रेषु शक्तिग्रह इति ' वृद्धिरादैच् ' इत्यादीनां ' आदैचो वृद्धिपदवाच्याः ' इति वाक्यार्थबोधानन्तरं भाविफलानुसंधानात्सार्थक्यबुद्ध्या स्वदेश एव दृढतरसंस्कारोत्पत्तौ एकसंबन्धिवृद्ध्यादिपदश्रवणे संज्ञा-

काल एव अत्र शास्त्रे व्यवह्रियते। [1]तत्र वाक्यार्थबोधे जाते 'भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यद्यथाश्रुतग्राहिप्रतिपन्नपेक्षो-

---

भिः गृहीतशक्तिस्मरणेन सर्वविधिशास्त्रोपकारः। एवमौपश्लेषिकाधिकरणबोधक-सप्तम्यन्तार्थोपाश्लिष्टस्य कार्यमव्यवहितपूर्वसंबन्धि बोध्यम् इति वाक्यार्थबोधे जाते 'इको यणचि' इत्यादावौपश्लेषिकाधिकरणबोधकसप्तम्यन्तरूपलिङ्गश्रवणेन एकसंबन्धिज्ञानविधया परिभाषार्थस्योद्बोधात् विधिनियमयोरेकवाक्यताम-न्तरा अचि पर इत्यर्थबोध इति गृहीतानियमस्मरणेन परिभाषाभिः प्रदीपवदे-कदेशस्थिताभिः सकलविधिशास्त्रोपकार इति भावः। ननु कोऽसौ देशः? यत्र वाक्यार्थबोधः प्रसिद्धः कुरुपाञ्चालादिस्तत्र न संभवतीत्यत आह— देशश्चेति। चस्त्वर्थे, वैयाकरणानां सांख्ययोगानुयायित्वेन 'दिक्कालावाका-शादिभ्यः' इति दिक्कालयोराकाशस्य च तत्त्वान्तरत्वानभ्युपगमादिदम्। अष्टा-ध्यायीस्थानुपूर्वीघटकपौर्वापर्यव्यवहारप्रयोजकसंनिवेशघटकावकाश इत्यर्थः फ-लितः। ननु संज्ञापरिभाषाणां कार्यार्थत्वात्कार्यज्ञानस्य च विधिशास्त्राधीन-त्वात्तत्तद्विध्याकाङ्क्षायाः जागरूकतया तदीयवाक्यार्थकाले वाक्यैकवाक्यताया आवश्यकत्वेन प्रधानदेश एव तल्लिङ्गानुसारेण गुणशास्त्राकर्षणस्य न्याय्य-तया वाक्यार्थे परस्परैकवाक्यतया स्वीक्रियमाणे कार्यकालपक्ष एव सदा संभ-वतीत्यसंभवदुक्तिकोऽयं यथोद्देशः। किं च स्वदेशे स्वार्थं ग्राहयतां संज्ञाप-रिभाषाशास्त्राणां पुरुषसंस्कारद्वारा विधिदेशीयत्वग्राहकमहावाक्यार्थमन्तरैव विधिशास्त्रोपकारकत्वमित्येवंरूपो यथोद्देशपक्षोऽत्र नाश्रयितुं युज्यते। स्वदेशे स्वार्थबोधोत्तरम् अस्य किं फलमिति फलाकाङ्क्षाया अनिवार्यत्वेन विधिवाक्या-र्थाभावेन फलाभावात्संज्ञापरिभाषयोरपि वाक्यार्थाभावप्रसक्तिरिति यथोद्दे-शपक्षस्यैवासंगतिरित्यत आह— तत्रेति। संज्ञापरिभाषाशास्त्रेष्वित्यर्थः॥ अनेनेति। संज्ञासु शक्तिस्मरणेन परिभाषासु नियमस्मरणेनेत्यर्थः॥ ज्ञान-मात्रेणेति। मात्रपदेन विशेषज्ञानव्यावृत्तिः। 'वर्णेनाप्यनर्थकेन न भवि-तव्यं किं पुनरियता सूत्रेण' इति 'वृद्धिरादैच्' इति सूत्रस्थभाष्यप्रा-

---

1. तत्तदित्यपि पाठः, काशीयहैमवतीसवलितपरिभाषेन्दुशेखरपुस्तके तत्रेत्येव पाठो दृश्यते। तत्र इत्येव पाठमङ्गीकृत्य व्याख्यात यागेश्वरेण।

ऽयं पक्षः' इति ईदूत्सूत्रे कैयटः ।

---

माण्येन संज्ञापरिभाषादेशे वाक्यार्थबोधनानन्तरं यद्यपीदानीं फलं न दृश्यते, तथापीदं आप्तमहर्षिप्रणीतत्वादनर्थकं न भवति । किं तु 'भविष्यत्यनेन किंचित्प्रयोजनम्' इति भाविफलानुसंधानेन प्रयोजनविशेषमनपेक्षमाणानां फलविशेषजिज्ञासानुदयाच्छास्त्रस्य सर्वाधिकारिकत्वेनाचार्यप्रणीतत्वात्सामान्यज्ञानेनैव संतोषः; न तु फलविशेषजिज्ञासयेति भावः । वृद्धिसूत्रस्थभाष्यबोधितप्रयोजनविशेषानाकलनेन जिज्ञासन्ते ये च फलविशेषं तदनुरोधी नायमित्याह— **यथाश्रुतग्राहीति** ॥ यथाश्रुतं गृह्णातीति यथाश्रुतग्राही, यथाश्रुतग्राही चासौ प्रतिपत्ता च यथाश्रुतग्राहिप्रतिपत्ता, संतुष्यन्यो यथाश्रुतग्राहिप्रतिपत्ता च संतुष्यद्यथाश्रुतग्राहिप्रतिपत्ता, तस्य अपेक्षा अपेक्षाबुद्धिः यस्मिन्पक्षे स संतुष्यद्यथाश्रुतग्राहिप्रतिपत्रपेक्षः, **प्रतिपत्ता** निश्चयवान् ॥ **अयं पक्ष इति** । यथोद्देशपक्ष इत्यर्थः । तथा च संज्ञापरिभाषाणां वाक्यार्थबोधे भाविफलानुसंधानेन सार्थक्यबुद्ध्या स्वदेश एव दृढतरसंस्कारोत्पत्तेः तद्धेतुभूतया अपेक्षाबुद्ध्या तदुत्तरं विधिप्रदेशे एकसंबन्धिज्ञानविधया स्मरणेन लक्ष्यसंस्कार इति अपेक्षाबुद्ध्या यथोद्देशपक्षः सिद्धः । अत एव अपेक्षापदमुपात्तमिति भावः ॥ **ईदूत्सूत्रे कैयट इति** ॥ तत्र हि तपरकरणेन अग्नी३ इत्यत्र कार्यकालपक्षे 'अणोऽप्रगृह्यस्य—' इत्यत्र 'ईदूदेत्—' इत्यस्योपस्थितौ तद्दृष्ट्या प्लुतस्य सिद्धतया ईकारस्य त्रिमात्रिकत्वेनाऽऽल्विधित्वेन स्थानिवद्भावाभावाच्च प्रगृह्यसंज्ञाया अप्रवृत्त्या अनुनासिकत्वापत्तिमाशङ्क्य यथोद्देशपक्षमाश्रित्य प्रगृह्यसंज्ञां प्रति प्लुतस्यासिद्धतया जातस्यापि प्लुतस्यासिद्धत्वेन पुनः संज्ञायां नानुनासिकत्वम्; संज्ञाप्रवृत्तौ कार्यस्यैव नियामकत्वात्, यदा यदा कार्यं तदा तदा तत्प्रवृत्त्यभ्युपगमात्, 'लक्ष्ये लक्षणम्—' इति न्यायस्य 'समः सुटि' इति ज्ञापकसिद्धस्य धर्मिग्राहकमानेन संज्ञातिरिक्तविषयकत्वाच्चेत्याशयकमुक्तमित्यर्थः ॥

अत्र पक्षे— संज्ञापरिभाषाणां विधिशास्त्रैकवाक्यतां विनैव स्वदेशे वाक्यार्थबोध इति तत्र जातशक्तिस्मरणेन जातनियमस्मरणेन च पदार्थ-

निर्णायकत्वाद्वाक्यार्थनिर्णायकत्वाच्च विध्युपकारकत्वम् । तत्र संज्ञाशास्त्रं परमुपजीव्यत्वेन तदन्तरा त्रैपादिकविधीनां तद्घटकपदशक्तिग्रहानुदयेन वाक्यार्थबोधासंभवादुत्थाकाङ्क्षया गृहीतशक्त्या सापादिकत्रैपादिकसकलविध्युपकारकं भवति, परिभाषाशास्त्रं तु नियामकं भवतीति नियामकत्वे शब्दतो अर्थतो वा निषेधपरम् अतः परिभाषाविधेयार्थस्मरणेन निषेधे कर्तव्ये 'पूर्वत्रासिद्धम्' इत्यनेन त्रिपाद्या असिद्धत्वात् त्रैपादिकातिरिक्तसापादिकविधिमात्रोपकारकम् । न च गृहीतपरिभाषार्थेन त्रैपादिककार्यसंस्काराभावे त्रैपादिकविधीनां लक्ष्यसंस्कारकबोधाभावादसंदिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वस्यैवासंभवाच्छास्त्रत्वमुपजीव्यासिद्धत्वबोधकेन 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वबोधनस्याशक्यत्वात्संज्ञाशास्त्राणामिव परिभाषाशास्त्राणामपि त्रैपादिकविध्युपकारकत्वमव्याहतमेवेति शङ्क्यम्, गुणशास्त्रार्थग्रहात्पूर्वं त्रैपादिकविधीनां लक्ष्यसंस्कारकबोधाजनकत्वेऽपि अप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यसंस्कारककार्यज्ञानोत्तरम् 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वस्य सुवचत्वेन परिभाषाविधेयार्थस्मरणेन निषेधे कर्तव्ये त्रिपाद्याः असिद्धत्वस्य दुर्वारत्वेन त्रैपदिकातिरिक्तसापादिकविधिमात्रोपकारकत्वस्य परिभाषाशास्त्रेष्ववश्याश्रयणीयत्वात् । अथ 'पूर्वत्रासिद्धम्' इति शास्त्रे प्रधानभूतानां त्रैपादिकशास्त्राणां यद्भवति सजातीयं तदेव पूर्वग्रहणेन गृह्यते । अतश्च न परिभाषाशास्त्रं गुणभूतं पूर्वग्रहणेन ग्रहीतुं युज्यत इति परिभाषाशास्त्रस्य त्रैपादिकविध्युपकारत्वं दुर्वारमेवेति चेत्, अत्रोच्यते— 'नलोपःसुप्स्वर—' इति सूत्रे संज्ञापदमुपाददानः पाणिनिराचार्यः पूर्वग्रहणेन गुणशास्त्रस्यापि ग्रहणमिति बोधयतीति कथं वा निवार्यताम् 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वम् । यस्तु 'संज्ञापरिभाषाणामत्यन्तपाराार्थ्यान्न स्वातन्त्र्येण कार्यावगमहेतुत्वं केवलमाचार्येण लाघवायानेकप्रधानाङ्गभावप्रतिपत्तये पृथगुपदेशः कृतः । ततश्च 'तस्मिन्निति निर्दिष्टे—' इत्यनेन न किंचित्कार्यं क्रियते, नापि 'झलो झलि' इत्यनेन, किं तर्हि संहृत्य कार्यं क्रियते । ततो झल्यनन्तरे पूर्वस्य सकारस्य झलः परस्येति वाक्यार्थ इति एकवाक्यतायां पौर्वापर्याभावादसिद्धत्वाभाव इति कैयटे स्पष्टमुक्तत्वात्कथं परिभाषादृष्ट्या त्रिपाद्या असिद्धत्वमिति वक्तुमाशंसेत; स तर्हि वक्तव्यः 'यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमिति 'पूर्वत्रासिद्धं' इति

सूत्रस्थभाष्यप्रामाण्येन संस्कार्यदृष्ट्या संस्कारकस्य सिद्धत्वेऽपि संस्कारकपरिभाषादृष्ट्या संस्कार्यस्यासिद्धत्वेन संस्कारासंभव इति परिभाषाविधेयार्थस्मरणेन संस्कारस्त्रिपाद्यां दुर्वचः। किंच स्वस्वदेशे परिभाषाविध्योर्वाक्यार्थबोधे पश्चात्परिभाषादृष्ट्या त्रिपाद्या असिद्धत्वेनैकवाक्यतैव दुर्लभा। तथा च तयोरेकवाक्यतायां पौर्वापर्याभावादसिद्धत्वाभावः। तस्मिंश्च सति तयोरेकवाक्यतेत्यसिद्धत्वाभावापादनमन्योन्याश्रयदूषितम्। अपि च कार्यकालपक्षपरतया कैयटो नेय इति। स्यादेतत्; संज्ञापरिभाषाणां पदार्थनिर्णायकत्वेन वाक्यार्थनिर्णायकत्वेन च विध्युपकारकत्वे ‘कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति’ इति प्रदीपदृष्टान्तप्रदर्शनपर ‘षष्ठीस्थान—’ इति सूत्रस्थभाष्यासंगतिः इति चेत्, अत्रोच्यते— यथोद्देशे स्वदेशे वाक्यार्थस्य सत्त्वेन तत्तदर्थोपस्थित्यैव सर्वप्रकाशकत्वं संज्ञापरिभाषासाधारणं संस्कारमात्रस्यैव ज्वलनशब्दार्थत्वे बाधकाभावः। संस्कार्यविधीनामनेकत्वेन युगपच्छ्रोतृबुद्ध्यनारोहे स्वदेशे गृहीतवाक्यार्थबोधस्य तत्र विधौ स्मृतिमात्रेण तत्तत्संस्काराभिप्रायेण ‘एकदेशस्थः’ इत्युक्तिरुपपद्यते। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत्संज्ञापरिभाषाशास्त्रं लिङ्गेन गृहीतस्वार्थस्मृतिद्वारा सर्वशास्त्रोपकारकमिति प्रदीपदृष्टान्तसंगतिः। ‘कश्चित्परिभाषारूप’ इति कैयटोऽपि संज्ञापरिभाषोभयसाधारण्येन पारार्थ्यस्योपलक्षणतया योजनीय इति बोध्यम्॥

इयान्परं विशेषः— यथोद्देशे संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वदेशे जनितस्य वाक्यार्थबोधस्यान्यत्र स्मरणेन पदार्थनिर्णयं वाक्यार्थनिर्णयं चोपजनयतीति प्रकरणविशेषानुपक्रमेण पठितानां तेषां अनारभ्याधीतेन ‘यस्य पर्णमयीजुहूः’ इत्यादिवाक्येन विहितायाः पर्णतायाः सर्वप्रकरणशेषत्वेन सर्वप्रकृतिगामित्वमिव अशोकवनिकान्यायेन सकलप्रकरणशेषत्वात्सकलशास्त्रोपकारकत्वमित्यवश्यमङ्गीकर्तव्यम्, अस्मिंश्च पक्षे संज्ञाविध्योः विधिपरिभाषयोश्च भिन्नोद्देश्यविधेयविषयकत्वेन एकबोधीयविषयतासमर्पकत्वरूपाया एकवाक्यतायाः प्रतिपादयितुमशक्यत्वाद्वाक्यभेदेनैव विध्युपकारकत्वम्। आकाङ्क्षाधीनाभिन्नभिन्नसंसर्गप्रतिपादकवाक्यद्वयजन्यशाब्दबोधविषयीभूतमहावाक्यार्थ-

त्वरूपा वाक्यैकवाक्यतापि न स्वीकर्तुं शक्या ; युगपद्बोधाभावेन तस्याः दुरुपपादत्वात् , अवान्तरवाक्यार्थबोधानङ्गीकारेण तस्या व्याघाताच्च कार्यकालपक्षे विधिप्रदेशे संज्ञाशास्त्रार्थबोधेन तद्बोधानन्तर्यसंभवेऽपि यथोद्देशे उपजीव्योपजीवकभावापन्नस्यापि बोधस्यानन्तर्याभावाच्च, प्रथमं संज्ञाशास्त्रीयो वाक्यार्थबोधः, अनन्तरं शक्तिग्रहः, परस्ताच्च स्मरणम् , ततश्च विधिघटकपदार्थनिर्णयः एवं परिभाषाशास्त्रीयः पूर्वं वाक्यार्थबोधः, अनन्तरं च स्मरणम् , तस्माच्च विधिवाक्यार्थनिर्णयः इति न स्वार्थः तदर्थान्वितः न वा स्वजन्यशाब्दबोधविषयः इति स्वजन्यशाब्दबोधविषयीभूतविध्यर्थान्वितस्वार्थत्वस्य दुर्वचत्वाच्च, वाक्यार्थबोधस्मरणेन विधिघटकपदार्थनिर्णयस्य विधिवाक्यार्थनिर्णयस्य च संज्ञापरिभाषाशास्त्रैकसाध्यत्वेऽपि विभिन्नक्रियासंबन्धेन निष्पन्नस्य तद्वाक्यार्थस्य विधिवाक्यार्थेन सह संबन्धाभावाच्च, 'समिधो यजति—' इत्यादिवाक्यानां 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' इति दर्शपौर्णमासविध्येकवाक्यत्वं यथा, न प्रकृते तथेति भेदस्य स्पष्टत्वाच्च । न हि अवान्तरवाक्यार्थबोधानङ्गीकारे परस्परमुपकार्योपकारकभावज्ञानानुदयेनाङ्गाङ्गिभावज्ञानानुदयः, प्रकरणविशेषानारम्भेण सर्वप्रधानशास्त्राङ्गत्वस्याशोकवनिकान्यायेनोपपत्तेः, प्रथमपठितानां सापादिकानां गुणशास्त्राणां पूर्वं वाक्यार्थबोधे अनन्तरं वृद्ध्यादिपदश्रवणे एकसंबन्धिज्ञानविधया विधिदेशे गुणशास्त्रार्थस्मरणेन गुणशास्त्रेषु विध्युपकारकत्वसिद्धावङ्गाङ्गिभावस्य सूपपादत्वाच्च । स्यादेतत् ; औपश्लेषिकाधिकरणबोधकसप्तम्यन्तत्वादिरूपालिङ्गज्ञानाय पूर्वमवान्तरबोधः आवश्यक एवेति 'स्वार्थबोधे समाप्तानाम्—' इति परिभाषाशास्त्रविधिशास्त्रयोः वाक्यैकवाक्यता सूपपादेति चेत्, मैवम् ; वृद्ध्यादिपदश्रवणवत्सप्तम्यन्तादिपदश्रवणेऽपि एकसंबन्धिज्ञानविधया स्मरणस्य सुवचत्वेनावान्तरवाक्यार्थबोधस्यानावश्यकत्वात् । न चैवमवान्तरवाक्यार्थबोधानङ्गीकारे सामान्यतो जायमानमादाय कार्यज्ञानं प्रवर्तमानमसिद्धत्वं दुर्निरूपमिति शङ्क्यम्, शब्दतोऽर्थतो वा निषेधपरमतो नियामकं भवति परिभाषाशास्त्रम् । अतश्च तद्विधेयार्थस्मरणेन निषेधे कर्तव्ये निषेधस्य पूर्वपरिभाषार्थकार्यस्य 'पूर्वत्र' इत्यनेन ग्रहणेनासिद्धत्वस्य सूपपादत्वात् ॥ न हि 'पूर्वत्रासिद्धम्' इत्यनेन शास्त्रत्वेन रूपेणासिद्ध-

त्वं बोध्यते, नत्वन्येन रूपेण। अन्यथा सापादिकशास्त्राणां त्रिपाद्यामप्रवृत्तौ तत्रत्यपदानामसाधुत्वं स्यात्। शास्त्रत्वेन रूपेणासिद्धत्वे तु सापादिकविधिशास्त्रीयोद्देश्यतावच्छेदकरूपेणासिद्धत्वाबोधनात्तत्तद्विधिशास्त्राणि त्रिपादीघटकपदेषु प्रवर्तन्त एव। शास्त्रत्वं च, साक्षात्परंपरया वा असंदिग्धानाहार्यप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वम्। तथा च त्रैपादिकविधिशास्त्राणां शास्त्रत्वप्रापकपरिभाषाशास्त्रप्रवृत्तेः पूर्वमप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधाजनकत्वेऽपि अप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यसंस्कारककार्यज्ञानमादाय जायमानमसिद्धत्वं दुर्वचम्, त्वद्रीत्यावान्तरवाक्यार्थबोधानङ्गीकारात्, इति शक्यते वक्तुम्। त्रैपादिकविधिशास्त्रेषु सापादिकपरिभाषार्थस्मरणाभावेऽपि अप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वसंभावनया शास्त्रत्वसंपादनेऽवान्तरवाक्यार्थबोधस्यानावश्यकत्वात्। न च संभावनापि तादृशी अवान्तरवाक्यार्थबोधोत्तरमेवेति शङ्क्यम्, परिभाषा शास्त्रीयार्थस्मरणाभावेऽपि पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावात्त्रैपादिकविधित्वावच्छेदेन यत्किंचिल्लक्ष्यसंस्कारकं कार्यज्ञानं जायत एवेत्युक्तसंभावनाया अवान्तरवाक्यार्थग्रहात्पूर्वं सुवचत्वात्। अवान्तरवाक्यार्थबोधस्तु असिद्धत्वप्रवृत्तेः परं सापादिकपरिभाषार्थस्मरणाभावे संभवत्येव। एवं च परिभाषावाक्यार्थग्रहकाले तत्स्मरणसमये वा ततःपरमप्यसिद्धत्वप्रवृत्तेः पूर्वमवान्तरबोधानङ्गीकारेण वाक्यैकवाक्यता दुर्वचा। आर्थिकानिषेधस्य परिभाषामूलकत्वात्तत्स्मरणेऽपि तस्य वाक्यार्थबोधरूपत्वासंभवेन वर्षसहस्रेणापि सा दुरुपपादा। किंच तस्या उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वस्वाभाव्येन परिभाषाशास्त्रीयस्य बोधस्य विधिवाक्यार्थबोधोपजीव्यत्वं न संभवत्येवेति दुर्निरूपैव सा। संज्ञाशास्त्रविधिशास्त्रयोस्तत्संभवेऽपि यथोद्देशे गृहीतैव शक्तिः प्रदेशे स्मर्यत इति तस्य वाक्यार्थबोधरूपत्वासंभवेन यौगपद्यासंभवात् नैव शक्यते सा प्रतिपादयितुम्। किं च विध्यर्थान्वितस्वार्थबोधकत्वरूपं विध्यैकवाक्यत्वं स्मरणेनैवेष्टसिद्धिरेवंफलके यथोद्देशे संज्ञाशास्त्रविधिशास्त्रयोः को हि नाम शक्नोत्युपपादयितुम्, यदि स्मरणमेव वाक्यार्थसंबन्ध इत्याग्रहः तर्हि शक्तिग्रहात्पूर्वं विधिवाक्यार्थबोधानुदयेन विभिन्नक्रियासंबन्धेन निष्पन्नेन वा-

क्यार्थेन संबन्धाभावः सुतराम् इति, 'यत्र तु विभिन्नक्रियासंबन्धेन निष्पन्नयोर्वाक्यार्थयोराकाङ्क्षावशात्परस्परसंबन्धः तत्र सा वाक्यैकवाक्यता' इति उक्तलक्षणलक्षिता सा दुरुपपादा। अपि च 'यन्नदुःखेन—' इत्यनेन स्वःपदशक्तिग्रहे 'स्वाराज्यकामो यजेत' इत्यादौ तदर्थोपस्थितिवत् 'वृद्धिरादैच्' इत्यादिना वृद्ध्यादिपदशक्तिग्रहे 'वृद्धिरेचि' इत्यादौ आदैजादीनामुपस्थितिरिति विधिदेशे पुनस्तत्प्रतिसंधानस्य नोपयोगः, पक्षवैलक्षण्यं च सापादिककार्यसंबन्धे यथोद्देशः, त्रैपादिकतत्संबन्धे तु कार्यकालः, इत्येतावतैवेति वक्तव्यम्। संगृहीतमेवेदं यथोद्देशं कार्यकालमित्यक्षरस्वारस्येन परिभाषायाम्। यथोद्देशपदस्य उपदेशदेशातिक्रमणाभावार्थकत्वेन उपदेशदेशश्च संज्ञापरिभाषाणां सापादिकदेश एवेति सापादिकदेशभिन्नदेशसंक्रमाभावस्यैव परिभाषाबोध्यत्वेन सिद्धमेव यथोद्देशे सापादिकविधिमात्रोपकारकत्वम्, अन्यथा अचेतनस्य संज्ञापरिभाषस्य स्वदेशभिन्नदेशसंक्रमासंभवेन परिभाषया तन्निषेधस्य काकदन्तपरीक्षापर्यायता स्यात्। कार्याणां काल एव कालो यस्येति विग्रहेण संज्ञापरिभाषस्य कार्यदेशस्थत्वं प्रतिपाद्यते। यथोद्देशपक्षाश्रयणेनैव सापादिकत्रैपादिकविध्युपकारे तदर्थं परिभाषान्तरमनावश्यकमिति सामर्थ्यात्त्रैपादिककार्यदेशस्थत्वमेवाश्रीयत इति संज्ञापरिभाषाणां कार्यकाले त्रैपादिकविधिमात्रोपकारकत्वमित्यङ्गीकर्तव्यम्, अत एव 'इकोगुण—' इति सूत्रे कैयटे यथोद्देशे एव परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायामित्युक्तम्। कार्यकालपक्षे परिभाषाणां त्रैपादिककार्यदेशस्थत्वेन तत्र परस्परं पूर्वत्वपरत्वाभ्यां बाध्यबाधकभावो दुर्निरूप इति तदाशयः। एवम् 'कार्यार्थत्वाद्गुणानां कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वात्' इति ईदूत्सूत्रे कैयटः। तथा च संज्ञापरिभाषाणां कार्यैकवाक्यतामन्तरा स्वदेशे स्वार्थमात्रबोधे तत्स्मरणेन कार्यप्रदेशोपकार इति यथोद्देशः, कार्यैकवाक्यतायां तु कार्यकालपक्ष इति पक्षयोर्विशेषः। कार्येण एकवाक्यता च त्रैपादिकेनैव कार्यकाले। न हि संज्ञाशास्त्रार्थप्रवृत्तिमन्तरा शक्तिग्रहासंभवेन विधिशास्त्रीयस्यैव बोधस्याजननात् निरुक्तशास्त्रत्वासंपत्त्या संज्ञाशास्त्रदृष्ट्या नासिद्धत्वं त्रिपाद्या इति त्रिपाद्यां तदुपकारसंपत्तये संज्ञाविषये कार्यकालपक्षाश्रयणमनावश्यकमिति शङ्क्यम्, कार्यदेशस्थत्वसंपत्तये तदावश्यकत्वात्, एकसंज्ञाविषये अन्यतरेणापि तद्धट-

कपदशक्तिनिर्णये उपजीव्यत्वासंभवेन तद्दृष्ट्या त्रैपादिकासिद्धत्वतादवस्थ्याच्च। एतेन 'एवं चात्र पक्षे संज्ञापरिभाषाणां वाक्यैकवाक्यतया पदार्थनिर्णायकत्वेन वाक्यार्थनिर्णायकत्वेन च विध्युपकारकत्वम्' इति प्राचीनमतवर्णनाय प्रवृत्तो वाक्यार्थचन्द्रिकाकारः प्रत्युक्तः। उक्तरीत्या वाक्यैकवाक्यतायाः दुर्निरूपत्वात्, वाक्यैकवाक्यतयान्वये 'भुक्तवन्तम्—' इति न्यायेन जातस्य यणादेः निवृत्त्ययोगाच्च। अथेदमुच्यते, स्वदेशे शास्त्रश्रवणे व्युत्पन्नस्य पुरुषस्य तत्रैव स्यादर्थबोधः, न त्वन्यत्रेति सर्वत्र स्वदेश एव वाक्यार्थबोधः संभवति; अतो यथोद्देशपक्षाश्रयणं विफलमिति चेत्, अत्र ब्रूमः— यदि स्यान्नाश्रितो यथोद्देशपक्षः, तर्हि 'कार्यकालं संज्ञापरिभाषम्' इति संज्ञापरिभाषाणां कार्यकालत्वमव्याहतमेव स्यादिति कथं वा सिध्यतु यथोद्देशपक्षाभिमतं फलम्। अचेतनमपि संज्ञापरिभाषाशास्त्रं स्वदेशसंबन्धध्वंसविरहमनुभवत्स्वदेशे स्वार्थबोधनद्वारा वाक्यभेदेनापि विधिसंस्कारकं भवतीत्येव तात्पर्येण स्वीकृतोऽयं पक्षो यथोद्देशः। अस्मिंश्च पक्षे संज्ञापरिभाषाशास्त्राणां स्वदेशे वाक्यार्थबोधोत्तरं वृद्धिसूत्रस्थभाष्यप्रामाण्येन 'भविष्यति किंचिदनेन प्रयोजनम्' इति भाविफलानुसंधानादपेक्षाबुद्ध्या दृढतरसंस्कारेण विधिप्रदेशेषु एकसंबन्धिज्ञानाविधया संस्कारोद्बोधे लक्ष्यसंस्कारः। एवं च कैयटमतमप्युत्तमाधिकारिपरतयैव योजयितुं शक्यते। उत्तमाधिकारिणामेव वृद्धिसूत्रस्थभाष्याभिमतार्थानुसरणावश्यकत्वात्, मन्दानां फलजिज्ञासाया एवानुदयात्, यदा संभवति फलजिज्ञासा तदा तेषामपि विधिविशेषज्ञानेन संतोषे बाधकाभावाच्च, उत्तमाधिकारिणामपि वृद्धिसूत्रस्थभाष्याभिमतमर्थमनुसरतां फलसामान्यजिज्ञासया संतोषस्य सूपपादत्वाच्च, अपश्यतामपीदानीं फलविशेषं तेषामुत्तमाधिकारिणामाप्तमहर्षिप्रणीतत्वान्नानर्थकमिदं भवति शास्त्रजातम्। अपितर्हि 'भविष्यति किंचिदनेन प्रयोजनम्' इति सार्थक्यबुद्ध्या स्वदेश एव दृढतरसंस्कारोत्पत्तौ तेनैव संज्ञापरिभाषादेशे अपेक्षाबुद्धिर्जायते। तत एवायं यथोद्देशपक्ष इति विशेषः। एतदेवाभिप्रेत्य 'यथाश्रुतग्राहिप्रतिपन्नपेक्षोऽयं पक्षः—' इत्युक्तम्। तत्र यथाश्रुतग्राहीत्यस्य न मन्दाधिकारीत्यर्थः, अपि तु संज्ञापरिभाषाशास्त्रे यथाश्रुतं गुरूपदेशादवगतम् 'भविष्यति किंचिदनेन प्रयोजनम्' इति भाष्यप्रामाण्यात्सार्थक्यबुद्धावुत्पन्नदृढतरसंस्कार एवापेक्षा-

बुद्ध्या गृह्णातीति यथाश्रुतग्राही, प्रतिपत्ता ज्ञानवान्, न तु जडः। तस्य वृद्धिसूत्रस्थभाष्यप्रामाण्यपरिज्ञानानुदयात्। तथा च कैयटमतमुक्तमाधिकारिपरमेवेति स्पष्टमेव विज्ञायते। एवं साध्वनुशासनेऽस्मिन् शास्त्रे सङ्केतग्रहस्यानुपयोगात् 'वृद्धिरादैच्' इत्यादौ आदैचो वृद्धिपदवाच्या इति शक्तिग्रहे जातेऽपि तदानीं फलादर्शनेन अनुपयुक्तमिदं शास्त्रमनर्थकम् इत्यानर्थक्यज्ञानेनोपेक्षाबुद्धौ दृढतरसंस्कारानुत्पत्त्या 'वृद्धिरादैच्' इत्यादौ एकसंबन्धिवृद्धिपदज्ञानेऽपि संस्कारस्यानुद्बोधादादैचामनुपस्थितौ वृद्धिपदार्थजिज्ञासायाम् 'वृद्धिरादैच्' इति सूत्रमुपतिष्ठत इति संज्ञापरिभाषादेशे दृढतरसंस्काराभावान्नापेक्षाबुद्धिरित्युपेक्षाबुद्ध्या कार्यकालपक्षोत्थानसंभवः। तथाचापेक्षाबुद्ध्युपेक्षाबुद्धी यथोद्देशकार्यकालहेतुभूते। एवं च बुद्धिभेदेन पक्षभेद इति कैयटमतम्, न त्वधिकारिभेदेनेत्युपाध्यायगूढाकूतम्। फलं चास्य अरुंतुद इत्यत्र 'पूर्वत्रासिद्धम्, इत्यनेन 'असिद्धं बहिरङ्गमन्तरङ्गे' इति पूर्वस्मिन् परिभाषाकार्ये कर्तव्ये परस्य संयोगान्तलोपस्यासिद्धत्वम्। तेनान्तरङ्गाभावात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न प्रवर्तते। ततश्च संयोगान्तलोपः सिद्धो भवति। एवं राज्ञ इत्यादौ श्चुत्वसिद्धिः, दत इत्यादौ भसंज्ञाप्रवृत्त्या जश्त्वाभावश्च सिध्यति, अन्यथा जश्त्वविध्येकवाक्यतापन्नपदसंज्ञाया निःशङ्कं प्रवृत्तौ जश्त्वापत्तिर्दुर्वारा स्यात् इति बोध्यम् ॥ इयं च परिभाषा न्यायसिद्धा। दीपो यथा प्रभाद्वारा सर्वग्रहप्रकाशकः, एवमेतत्संज्ञापरिभाषाशास्त्रं लिङ्गेन गृहीतस्वार्थस्मृतिद्वारा सर्वशास्त्रोपकारकम्, इति प्रदीपन्यायेन एकदेशस्थस्यापि संज्ञापरिभाषाशास्त्रस्य सर्वशास्त्राभिज्वलकत्वं सिध्यतीत्यभिप्रेत्य 'कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति' इति भाष्ये उक्तमिति सर्वमाञ्जस्येनोपपद्यत इति प्राचीनसिद्धान्तपद्धतिः ॥

अथेदमसंगतम्— संभवत्येकवाक्यत्वे वाक्यभेदो न न्याय्यः, सत्यपि वाक्यभेदे नियमार्थत्वे त्रैदोष्यापातः। संज्ञाविषये वृद्धिपदत्वावच्छेदेनादैज्वाचकत्वबोधनाज्जिज्ञासा न भवतीति तत्र संभवति नैरर्थक्यज्ञानादुपेक्षाबुद्धिः कार्यकालपक्षे। परिभाषाविषये तु औपश्लेषिकाधिकरणबोधकसप्तम्यन्तघटिते शास्त्रे निर्दिष्टे पूर्वस्य इत्युपतिष्ठते, इत्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टस्य कार्यमव्यवहितपूर्वसंबन्धि बोध्यम्, इति वाक्यार्थबोधे जाते औपश्लेषि-

केचित्तु परिभाषाविषये 'तस्मिन्—' इत्यादिवाक्यार्थबोधे सप्त-

---

काधिकरणबोधकसप्तम्यन्तघटितं शास्त्रं किम्? इत्युत्थितायामाकाङ्क्षायामुपेक्षा-बुद्धिः नैव सार्थक्यज्ञानाच्छास्त्रस्य संभवति इति कार्यकालपक्षे नोपेक्षाबुद्धिर्बी-जम् इति परिभाषाविषये वक्तुं शक्यते, इति प्राचीनमतमस्वरसग्रस्तमुत्पश्यन् स्वसिद्धान्तमुपवर्णयितुमारभते— **केचित्त्विति** । महाभाष्यगूढाशयविद इत्यर्थः । केचित्तुशब्दोऽत्र परेतुपर्यायः, अत एव स्वसिद्धान्तप्रतिपादनावसरे शेखरादिषु परेतुपर्यायः केचित्तुशब्दः प्रयुज्यते । 'इति केचित्' इत्यन्ते यत्र केचिच्छब्दो भवति प्रयुक्तः तत्रैव सोऽरुचिबोधकः, नत्वन्यत्रेति एतद्ग्रन्थ-कारशैलीति विवेकः । एतेन 'अत एवैतावदंशस्य दुष्टत्वेन तत्रारुचिसूचनाय केचिदित्युक्तम्, अन्यथा एतदन्तस्य सर्वस्य सिद्धान्तत्वेन परेत्विति वक्तुमुचि-तम्—' इति केषाञ्चिदुक्तिः परास्ता । उद्योते विप्रतिषेधसूत्रे 'केचित्तु न हि व्यक्तिपक्षे सर्वं शास्त्रं व्याप्नोति, न तु जातिपक्ष इत्यत्र मानमस्ति—' इत्यारभ्य विप्रतिषेधाप्रसक्तेरिति वदन्ति' इत्यन्तेन प्रतिपादितस्यैवार्थस्य सकृद्गतिन्याय-निरूपणावसरे प्रकृतग्रन्थे सिद्धान्ततया स्वीकारस्य सर्वसंमतत्वात् । 'अदसो मात्' इत्यत्र उद्योतविरोधं तु परस्तात्परिहरिष्यामः ॥ **परिभाषाविषय इति** ॥ परिभाषाप्रयोज्यविध्युपकारविषय इत्यर्थः । यथोद्देशे इति शेषः ॥ **तस्मि-न्नित्यादिवाक्यार्थबोधे इति** ॥ 'तस्मिन्निति निर्दिष्टे—' इत्यादीनामौपश्ले-षिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टस्य कार्यं विधीयमानमव्यवहितपूर्वसं-बन्धि बोध्यमिति वाक्यार्थबोधे जाते, विधीनां च वाक्यार्थबोधे जाते इत्यर्थः । अन्यथा परस्परमुपकार्योपकारकभावज्ञानानुदयात्परिभाषासु उपकारकत्व-बुद्धिरेव न स्यादिति भावः ॥ **सप्तमीनिर्देशादि क्वेति पर्यालोचनायामिति** ॥ औपश्लेषिकाधिकरणबोधकसप्तम्यन्तादिघटितं शास्त्रं किमिति जिज्ञासायामुदि-तायामित्यर्थः ॥ **सकलतत्तद्विध्युपस्थिताविति** ॥ तस्य विधिः तद्विधिः, तस्य तद्विधिः तत्तद्विधिः, सकलश्चासौ तत्तद्विधिश्चेति कर्मधारयः । उपकार्योपका-रकभावः प्रथमषष्ठ्यर्थः अवयवावयविभावः द्वितीयषष्ठ्यर्थः । प्रथमतत्पदेन परिभाषाशास्त्रस्य ग्रहणम्, द्वितीयतत्पदेनौपश्लेषिकाधिकरणबोधकसप्तम्यन्ता-दिपदस्य ग्रहणम्, तथा च परिभाषाशास्त्रोपकार्यौपश्लेषिकाधिकरणबोधकस-

मीनिर्देशादि क्वेति पर्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्य एकवाक्यतयैव नियमः। कार्यकालपक्षे

---

प्रम्यन्तादिपदघटितसकलविधिशास्त्रोपस्थितावित्यर्थः। न हि कतिपयविध्युपस्थितौ शान्तैव जिज्ञासा इति सकलविध्युपस्थितिरप्रसक्तैवेति युज्यते वक्तुम्, अशोकवनिकान्यायेन कस्योपस्थितिः कस्यवानुपस्थितिः इत्यत्र विनिगमकाभावेन सर्वेषामप्युपस्थितौ बाधकाभावात्। त्रैपादिकविध्युपकाराय कार्यकालपक्षः परमवश्यमाश्रयणीय इति न तस्य निरालम्बनत्वमापादयितुं शक्यते। सकलेत्येतदपि त्रैपादिकातिरिक्तस्वोपकार्यसापादिकविधिसाकल्यबोधकमिति न तस्यासांगत्यम्, एवमुत्तरत्रापि। अनेन 'अत्र सकलेत्यसंगतं यथोद्देशे परिभाषादेशे सकलविध्युपस्थितौ मानाभावात्कार्यकालपक्षस्य निरालम्बनत्वापत्तेः, कतिपयविध्युपस्थित्या जिज्ञासायाः शान्तत्वेन सकलविध्युपस्थितेरनुपयोगाच्च' इति वदन् विश्वनाथभट्टः समाहितः॥ **सकलतत्तत्संस्कारायेति**॥ परिभाषाशास्त्रोपकार्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तादिपदघटितसापादिकसकलविधिशास्त्रीयलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिनिश्चितवाक्यार्थबोधसंपादनायेत्यर्थः॥ **गुणभेदामिति**॥ 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यनेन ग्रहसंमार्जनविधाने एकत्वविवक्षया एको ग्रहः संमार्जनीय इत्याशङ्क्य ग्रहं प्रति गुणः संमार्ग इति 'प्रतिप्रधानं गुण आवर्तते' इति न्यायेन यावन्तो ग्रहास्ते सर्वेऽपि संमार्जनीया इति यथा कल्प्यते, तद्वदिहापि 'तस्मिन्निति निर्दिष्टे—' इत्यादीनां वाक्यार्थबोधे जाते वाक्यभेदादिपरिहाराय 'इको यणचि' इत्यादावार्थिकनिषेधपरपरस्मिन्निति विशेषणदलोपस्थितिः। ततश्च इकः स्थाने यण् भवति अचि परे इति विधिवाक्यार्थः परिच्छिद्यते। तादृशदलनिवेशात्प्राग्व्यवहिते चाचि प्रसक्तस्य यणः आर्थिकनिषेधपरः संपद्यते परिष्कार इति तस्यार्थिकनिषेधपरविशेषणदलनिवेशे तात्पर्यं कल्पयित्वा पदोपस्थितिर्विधीयते। तथा च गुणशास्त्रोपस्थितार्थिकनिषेधपरपरस्मिन्नित्यादिविशेषणदलावृत्तिमित्यर्थः॥ **एकवाक्यतयैवेति**॥ स्वोपस्थाप्यार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकपदघटितस्वरूपवाक्यार्थैकवाक्यतया स्वघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितस्वरूप-

पदैकवाक्यतया वेत्यर्थः। यत्र विधेर्वाक्यार्थबोधानन्तरं परिभाषायाश्च तद्बोधानन्तरं अन्यतराकाङ्क्षया परिभाषानियमविधिबललभ्यपदेनैकवाक्यता, तत्र वाक्यार्थैकवाक्यता। यत्र च विधेर्वाक्यार्थबोधे परिभाषोपस्थापितेन परिभाषाघटकपदेन एकवाक्यता, तत्र पदैकवाक्यता इति सिद्धान्तः। वस्तुतस्तु श्रौतपदैकवाक्यता, आर्थपदैकवाक्यता चेति द्विविधा पदैकवाक्यता। तत्र आर्थपदैकवाक्यताया एव वाक्यार्थैकवाक्यतेति व्यवहारः। मीमांसकास्तु वाक्यैकवाक्यता, पदैकवाक्यता चेति द्विविधामेव यद्यप्येकवाक्यतां मन्यन्ते, तथापि पदैकवाक्यतापरपर्यायामवान्तरभिन्नामपि पदैकवाक्यताया नातिविभिन्नां वाक्यार्थैकवाक्यतामन्यां कामप्येकवाक्यतां नव्याः पुनर्वैयाकरणा व्याचक्षते॥ एवं च पक्षद्वयेऽपि परिभाषाणामेकदेशस्थत्वं भाष्योक्तं संगच्छते, अन्यथा 'परिभाषाणां कार्यकालपक्षे व्यवहर्तृन्यायेन विधिदेशीयत्वाभावेऽपि विधिदेशस्थत्वस्य सुतरामपलपितुमशक्यत्वेनैकदेशस्थत्वं न संभवेदेव' इति एकदेशस्थत्वप्रतिपादनपरभाष्यसिद्धान्तव्याकोपापत्तिः। एतेन शंकरभट्टीयमनुरुन्धानो 'व्यवहर्तृणां तद्देशगमने तद्देशीयत्वव्यवहाराभावेऽपि तद्देशस्थत्वव्यवहारोऽक्षत एव' इति सर्वमङ्गलाकारः प्रत्युक्तः। परिभाषाणां वाक्यार्थैकवाक्यतया पदैकवाक्यतया वा विध्युपकारकत्वम्, इत्यङ्गीकारेण विधिप्रदेशे सर्वत्र परिभाषाविधेयपदोपस्थितावपि नैतावता परिभाषाणां विधिदेशे गमनं संभवतीति तदुक्तेर्व्याहतत्वात्। परिभाषाकाङ्क्षया विध्याकाङ्क्षा चात्र पक्षे गुणभूतशिष्यापेक्षया प्रधानभूतस्यापि गुरोः कांस्यभोजनप्रवृत्तिवदुपपद्यत एवेति भावः॥ **नियम इति**॥ 'व्रीहीनवहन्ति' इत्यादाविव पक्षप्राप्तार्थानुवादेनार्थान्तरनिवृत्तिरित्यर्थः। क्रियत इति शेषः, एवं च क्त्वोपपन्नः। नीलमुत्पलमित्यादौ विशेषणाकाङ्क्षयेव परिभाषाकाङ्क्षया विध्याकाङ्क्षामुत्थाप्य आर्थिकनिषेधपरविशेषणदलनिवेशात्कल्पितया वाक्यार्थैकवाक्यतया पदैकवाक्यतया वा नियमः संपादनीयः। ततश्च प्राचीनैरङ्गीकृतो न वाक्यभेदो दोषः संभवति। अथात्र पक्षे एकस्य विधिशास्त्रस्य तत्तत्परिभाषया एकवाक्यतायां परिभाषाभेदेन एकवाक्यताभेदात्पुनर्वाक्यभेदो यद्यपि दोषाय, विधिशास्त्रेण अनेकपरिभाषाणां युगपदेकवाक्यत्वे बाधकाभावेन वाक्यभेदः सुपरिहर एवेत्यदोषः। एतेन 'संज्ञाविषये किमस्य प्रयोजनमित्याकाङ्क्षायाः

पूर्वोक्तरीत्या भविष्यति शास्त्रे क्वचित्प्रयोजनमिति सामान्यज्ञानेन शान्तिकल्पनवत् 'भविष्यति क्वचित्सप्तमीनिर्देशः' इति सामान्यज्ञानमात्रेण शान्तिसंभवे गुणभूतपरिभाषादेशे प्रधानविधीनामुपस्थितिकल्पनस्यान्याय्यत्वात्' इति परिभाषाभास्करानुरोधी सर्वमङ्गलाकारः परास्तः। संभवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात्, सत्यपि नियमार्थत्वे त्रैदोष्यापाताच्च। नहि 'विधिभेदेन परिभाषाणामावृत्तिवत् गुणभूतानेकपरिभाषानुरोधेन प्रधानशास्त्राणामावृत्तिकल्पनम्' इति सर्वमङ्गलोक्तो दोषो दुरुद्धरो भवति। 'प्रतिप्रधानं गुण आवर्तते' इति न्यायेन परिभाषानियमविधिबललभ्यार्थिकनिषेधपरपरस्मिन्नित्यादेः परिभाषोपस्थापितस्य परिभाषाघटकस्य इक इत्यादेर्वा पदस्य आवृत्तिकल्पनाङ्गीकारेऽपि प्रधानावृत्तिकल्पनाया अनावश्यकत्वेनाप्रामाणिकत्वात्। यदि सर्वपरिभाषासंस्कृतस्य एकस्य महावाक्यार्थस्य क्वाप्यसंभवेन कस्यापि लक्ष्यसंस्कारकत्वानापत्तिरित्युच्येत, तर्हि तं प्रतिब्रुवीत— नेदं सर्वमङ्गलोक्तं क्षोदक्षमम्, यतः स्ववृत्तिलिङ्गचिह्नितपरिभाषाशास्त्रविधेयपरस्मिन्नित्यादिविशेषणदलनिवेशेन वाक्यार्थैकवाक्यतया परिभाषोपस्थापिततद्घटकेगादिपदनिवेशेन पदैकवाक्यतया वा विधिशास्त्रेषु लक्ष्यधार्मिकसाधुत्वप्रकारकज्ञानोपयोगिनिश्चितवाक्यार्थबोध इत्यङ्गीकुर्वतामस्माकं न दोषलेशावकाश इति। अथेदमुच्यते 'अलोऽन्त्यस्य' इत्यस्योपस्थितिकाले 'आदेः परस्य' इत्यस्योपस्थित्यसंभवेनोत्सर्गापवादयोरसमकालप्राप्त्या अपवादेनोत्सर्गबाधानापत्तिरिति, तत्रैवं समाधास्यामः—तत्तत्परिभाषाविषयभूतेषु तत्तदाकाङ्क्षयोरुभयोरपि प्रत्येकं जायमानतया युगपदेकस्य विधेरुभयत्रोपस्थितेर्विरोधेन परत्वापवादत्वादिप्राबल्यसहकृतपरिभाषाकाङ्क्षयैव तत्तद्विध्याकाङ्क्षेति सिद्धान्तेन नापवादभूतस्योत्सर्गबाधकत्वं व्याहन्यताम्, अत एव उभयनिर्देशस्थले परपरिभाषाकाङ्क्षयैव विध्याकाङ्क्षा सिध्यति। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परपरिभाषाकाङ्क्षया पूर्वं इको यणचि' इत्यादिविध्याकाङ्क्षायामपि विरोधाभावात्पुनःप्रसङ्गविज्ञानेन 'षष्ठी स्थाने—' इति परिभाषाकाङ्क्षया विध्याकाङ्क्षा चोपपद्यत एव। परमाचार्यास्तु— प्रथमं परिभाषार्थे जाते 'आदेः परस्य' इत्यत्रोपस्थितविधेः 'अलोऽन्त्यस्य' इत्यत्रोपस्थितविधिं प्रत्यपवादत्वम्, एवं च 'आमि सर्वनाम्नः—' इत्यादौ न पूर्वपरयोः सुट् प्रसज्यताम्, उभयनिर्देशन्यायेन परपरिभाषार्थस्यैव लक्ष्यसं-

स्कारकत्वात् । पूर्वपरिभाषायां तु न तदुपस्थितिः 'ङमो ह्रस्वात्—' इत्यादौ अच इत्यर्थलाभश्चात एव सिद्धो भवति । विधिभेदेन गुणावृत्तिस्तु 'प्रतिप्रधानं गुण आवर्तते' इति न्यायसिद्धा इत्याहुः ॥ यत्तु— 'लोके भृत्याः सेवार्थं राजदेशमेव गच्छन्ति, न तु भृत्यदेशं राजेति गुणभूतपरिभाषादेशे प्रधान-शास्त्राणामुपस्थितिकल्पनमन्याय्यम्' इति सर्वमङ्गलाकारः तन्नविचारसहम्; राज्ञो भृत्यदेशे गमनाभावेऽपि अप्रधानस्य भृत्यादेः राजविषयकज्ञानं प्रति प्रति-बन्धकत्वं वर्षसहस्रेणापि न शक्यमायुष्मता प्रतिपादयितुम्, अतश्च परिभाषा-देशे विधिसूत्रबुद्धौ बाधकत्वं को वा कुशलमतिरभ्युपैतु । अत एव 'न हि तत्प-क्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति—' इति वक्ष्यते । एतेन 'न हि प्रयाजादिवाक्यैः दर्शपूर्णमासादिवाक्यमाकृष्यत इति परिभाषाशा-स्त्रेण कथं विधिशास्त्रमाकृष्येत' इति राघवेन्द्राचार्योक्तमपास्तम्, उभयाकाङ्क्षा-रूपप्रकरणात्मकचतुर्थप्रमाणेन प्रयाजादिवाक्यार्थे निर्णीते भाव्याकाङ्क्षायां तत्र दर्शपूर्णमासप्रधानवाक्योपस्थित्यैव तयोरङ्गाङ्गिभावस्य सर्वसंमतत्वात्, उपहो-मन्यायेन गुणाकाङ्क्षया प्रधानाकाङ्क्षायाः सुवचत्वाच्च, प्रधानभूतस्यापि राज्ञः अप्रधानभूतया स्त्रिया आकर्षणस्य लोकदृष्टत्वाच्च । यस्तु संज्ञाविषयेऽपि विध्याकाङ्क्षया एकवाक्यताया आवश्यकत्वेन संज्ञापरिभाषाणामैकरूप्ये वैरूप्यकल्पनमयुक्तमेवेति प्रत्यवतिष्ठते, स एवं प्रत्युच्यते— प्रथमं शक्ति-ग्रहे वृद्ध्यादिपदघटितविधिविषयकाकाङ्क्षाया उत्थाप्यतया तदेकवाक्यतायाः अनावश्यकत्वात् । न चैवं संज्ञाविषयेऽपि यत्र वृद्धिपदं तत्रादैजित्यु-पतिष्ठत इति पदैकवाक्यतायाः संभवेन वृद्ध्यादिपदघटितविध्याकाङ्क्षाया उत्थिततया विध्याकाङ्क्षया तदेकवाक्यता आवश्यकीति युज्यते वक्तुम् । समानविभक्तिकत्वरूपकारणसंपत्तिवैकल्येन संज्ञासंज्ञिभावस्य दौर्लभ्यापत्तेः, 'मृजेर्वृद्धिः' इत्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्ये-न उपस्थितपदार्थे अन्वये मानाभावात् इक्परिभाषायां तदुपस्थित्यनाप-त्तेश्च, 'यचि भम्' इत्यादौ तथाविधपदोपस्थितेर्वक्तुमशक्यत्वाच्च ॥ ननु यथोद्देशकार्यकालयोरुभयोरपि वाक्यार्थैकवाक्यतया पदैकवाक्यतया वा लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिनिश्चितवाक्यार्थबोधे वैलक्षण्याभावात्प-

तु त्रिपाद्यामप्युपस्थितिरिति विशेषः । एतदेवाभिप्रेत्य 'अधिकारो नाम

---

क्षद्वयाश्रयणं विफलमेवेत्यत आह— त्रिपाद्यामप्युपस्थितिरिति विशेषः इति ॥ कार्यकालपक्षेऽपि वाक्यभेदादिपरिहाराय विध्येकवाक्यता परिभाषाणामवश्यमङ्गीकर्तव्या, सा च विध्याकाङ्क्षया परिभाषाकाङ्क्षामुत्थाप्य कल्प्यते । 'पूर्वत्रासिद्धम्' इत्यनेन परिभाषादृष्ट्या त्रैपादिकविधेरसिद्धत्वेऽपि विध्याकाङ्क्षयैव गुणाकाङ्क्षोत्थापनाद्विधिदेशे आकर्षणतुल्या परिभाषोपस्थितिः स्वीक्रियते । अदृष्टपिशाचेन स्वादर्शिपुरुषाकर्षणवत् ॥ अथेदमुच्यते— सामान्यवाक्यार्थबोधमन्तरा सप्तमीनिर्देशादिकं केति पर्यालोचनाया अनुदयेन पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावात्परिभाषादेशे तादृशबोधानन्तरमेव विध्याकाङ्क्षा यथा अङ्गीक्रियते, तथा विधिदेशेऽपि सामान्यवाक्यार्थबोधानन्तरमेव औपश्लेषिकाधिकरणबोधकसप्तम्यन्तत्वादिनिश्चयसम्भवात् अप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यसंस्कारककार्यज्ञानोत्तरं 'पूर्वत्रासिद्धम्' इत्यनेन त्रैपादिकानामसिद्धत्वं यथा वा यथोद्देशे, तथा कार्यकालेऽपि अप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यसंस्कारकं कार्यज्ञानं त्रैपादिकासिद्धत्वप्रयोजकमस्त्विति त्रिपाद्यामुपस्थितिर्न संभवत्येवेति । अत्रेयं महती वाचोयुक्तिः, विध्याकाङ्क्षया परिभाषाकाङ्क्षामुत्थाप्य कल्पितस्यार्थिकनिषेधरूपकार्यस्य कार्यकालपक्षे त्रैपादिकविधिशास्त्रप्रयोज्यत्वेन पूर्वशास्त्रीयं कार्यं परशास्त्रकर्तृकमित्युपजीव्यत्वात्त्रैपादिकशास्त्रस्य उपजीव्यविरोधस्यान्याय्यत्वेन परिभाषादृष्ट्या त्रैपादिकासिद्धत्वस्य दुर्वचत्वात् इति ।' यदि यथोद्देशेऽपि 'औपश्लेषिकाधिकरणबोधकसप्तम्यन्तत्वादिरूपलिङ्गज्ञानाय प्रथमं सामान्यतो वाक्यार्थस्यावश्यकतया तद्बोधोत्तरं त्रैपादिकानामसिद्धत्वेऽप्यसिद्धत्वमहाय प्रथमं विधेरेवोपस्थितत्वेन तत्रैव परिभाषाकाङ्क्षाया दुर्वारत्वात्कार्यकालपक्षप्रवेशापत्त्या यथोद्देशपक्षस्यैव शास्त्रेऽसंभवापत्तिः—' इति संरभेत सर्वमङ्गलाकारः, तर्हि स वक्तव्यो यथोद्देशे परिभाषाकाङ्क्षया विध्याकाङ्क्षेत्यङ्गीकारेण प्रथमपठितानां सापादिकानां परिभाषाशास्त्राणामेव पूर्वमुपस्थित्या उपकारकत्वनिर्णयाय तेषामेव पूर्वं वाक्यार्थबोधे अनन्तरं जायमानमौपश्लेषिकाधिकरणबोधकसप्तम्यन्तत्वादिलिङ्गज्ञानजनकं कार्यज्ञानमादायासिद्धत्वं प्रवर्तेत इति प्रथमं परिभाषाणामेवोपस्थितत्वेन

कार्यकालपक्षप्रवेशो भवति दुरुपपाद इति ।

अत्रेदं बोध्यम्— यथोद्देशपक्षे परिभाषाणां सापादिकविधिमात्रोपकारकत्वम्, कार्यकालपक्षे तु त्रैपादिकविधिमात्रोपकारकत्वमिति प्रागुक्तं न विस्मर्तव्यम् । 'कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिः' इति मूलं तु यथोद्देशे यासां परिभाषाणां सापादिकविध्युपकारकत्वं तासामेव परिभाषाणां कार्यकालपक्षाश्रयणेन त्रैपादिकविध्युपकारकत्वमपीति बोधनपरम् । यदि विश्वनाथभट्टोक्तरीत्या 'विरामोऽवसानम्' इति ज्ञापकात्संस्कारकदृष्ट्या संस्कार्यस्य नासिद्धत्वं कल्प्यत इति 'तस्मिन्निति निर्दिष्टे—' इत्यादीना यथोद्देशेऽपि त्रैपादिकविध्युपकारकत्वं सूपपादमित्युच्यते, तर्हि 'विरामोऽवसानम्' इति पदशक्तिग्राहकशास्त्रप्रवृत्तिमन्तरा तदुपकार्यत्रैपादिकविधिघटकपदशक्तिग्रहासंभवेन शाब्दबोधस्यैवाजननात् असंदिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपशास्त्रत्वासंपत्त्या असिद्धत्वाभावेन 'विरामोऽवसानम्' इत्यस्य त्रिपाद्यां निष्कम्पं प्रवृत्तिर्भवत्येवेति तद्वैयर्थ्याभावेन ज्ञापकत्वं दुरुपपादमिति को हि नाम न विजानातु । अथेदमुच्यते— त्रैपादिकविधिशास्त्राणां तस्मिन्नित्यादिगुणशास्त्रविधेयविशेषणदलोपस्थितेः पूर्वम् अप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपशास्त्रत्वस्यैवासंभवात् शास्त्रत्वमुपजीव्यासिद्धत्वबोधकेन 'पूर्वत्रासिद्धम्' इति शास्त्रेणासिद्धत्वबोधनं तेषां दुःशकमिति विश्वनाथभट्टोक्तमेव युक्तमिति तत्रैवं प्रतिवच्मः— कोऽयमहेतुकः परिकरबन्धः, त्रैपादिकविधीनां तस्मिन्नित्यादिगुणशास्त्रविधेयार्थिकानिषेधबोधकविशेषणदलोपस्थितेः इक इत्यादिपदोपस्थितेर्वा पूर्वमप्रामाण्यज्ञानानास्कन्दितयत्किंचिल्लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वं नैव शक्यते निह्नोतुमिति संपद्यमानमुपजीव्य शास्त्रत्वमसिद्धत्वबोधकेन 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वबोधनं भवति सूपपादम् । अतश्च तेषामसिद्धत्वेन विना कार्यकालपक्षाश्रयणमुपायसहस्रैरपि त्रैपादिकविध्युपकारकत्वं दुर्निरूपमेव स्यात् । ततश्च सापादिकविधिमात्रोपकारिकाणां परिभाषाणां यथोद्देशपक्षाश्रयणेन परं त्रैपादिकविध्युपकारः सम्पत्स्यत इति कार्यकालपक्षस्य दत्तजलाञ्जलितेति कोऽयमकाण्डे ताण्डवाडम्बरः । अतश्च

त्रैपादिकविध्युपकारकत्वसम्पत्तये कार्यकालपक्षाश्रयणमावश्यकमेवेति स्पष्टमेव विज्ञायते सुमेधसाम् । एवं च 'यानि शास्त्राणि त्रिपाद्यां पदैकवाक्यताम्, पदार्थैकवाक्यताम्, वा प्राप्नुवन्ति, तेषां निरुक्तदिशा असिद्धत्वाप्रसक्त्या त्रिपाद्यां प्रवृत्तिर्भवत्येव' इति विश्वनाथभट्टोक्तिरज्ञानविजृम्भितैवेति विदांकुर्वन्तु विद्वांसः ॥ अप्रामाण्यज्ञानानास्कन्दिततयर्तिकचिल्लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वमादायैव शास्त्रत्वसम्पत्त्या शास्त्रत्वमुपजीव्यासिद्धत्वबोधकेन 'पूर्वत्रासिद्धम्' इत्यनेनासिद्धत्वबोधनात् 'हलि च' इत्यस्यासिद्धत्वान्निवर्त्यत्वायोगेन दीर्घप्रवृत्तौ चच्छूर्त्तीत्यादि सिध्यति, अन्यथा उत्परस्यात इत्यादौ तपरकरणसामर्थ्यात्तपरस्येको दीर्घो न भवतीति वचनं कल्प्यते, तस्य चार्थिकनिषेधपरविशेषणदलनिवेशे तात्पर्यं कल्पयित्वा रेफवकारान्तधातोरुपधाभूतस्य तपरभिन्नस्येको दीर्घो भवतीति 'हलि च' इति विधिवाक्यार्थपरिष्कारः सम्पद्यते। एतादृशपरिष्कारात्पूर्वं जातस्य विधिवाक्यार्थग्रहस्य तपरकरणाद्बाधकमस्तीति संभावनया तज्ज्ञानं प्रमा वा, न वेति संदेहेनासंदिग्धानाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबोधजनकत्वरूपशास्त्रत्वासंपत्त्या 'पूर्वत्रासिद्धम्' इत्यनेन 'हलि च' इत्यस्यासिद्धत्वप्रसक्त्यभावात्तपरत्वनिवर्त्यत्वायोगेन दीर्घाप्रवृत्तौ चच्छूर्त्तीत्याद्यसिद्धिर्दुर्वारा । प्रदर्शितश्चैष पन्थाः पण्डितप्रकाण्डैरस्मदाचार्यचरणैः परिभाषेन्दुशेखरभूषणे । न चैवं 'नाज्झलौ' इत्येतद्वाक्यार्थबोधे सति निर्णीततद्विषयपरिहारेण सवर्णसंज्ञाबोध्यनिश्चयेऽणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्, अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसंदेहेनाणुदिच्छास्त्रजबोधानापत्तिः इति संज्ञाशेखरविरोधः । उक्तरीत्या तत्रापि प्रत्येकमचां हलां च तुल्यास्यसूत्रजन्यशक्तिग्रहेण सवर्णसंज्ञायां तद्विषये बाधकसंभावनाभावेन तुल्यास्यसूत्रजबोधेऽप्रामाण्यज्ञानानास्कन्दितत्वासिद्ध्या अणुदिच्छास्त्रजबोधस्य सूपपादत्वादिति वाच्यम्, निषेधवाक्यार्थग्रहात्पूर्वं विधिनिषेधयोः पर्युदासन्यायेनैकवाक्यत्वासंभवेऽपि निषेधवाक्यार्थग्रहात्पूर्वं जातस्य विधिवाक्यार्थग्रहस्य बाधकमस्तीति ज्ञानेन तज्ज्ञानं प्रमा न वेति च सन्देहो जायेत इत्यप्रामाण्यज्ञानानास्कन्दितसवर्णपदशक्तिग्रहाभावस्तत्र वक्तुं शक्यते खलु, तदानीं तज्ज्ञानं प्रमा न वेति सन्देहे सन्देहस्य द्विकोटिकत्वेनाप्रामाण्यास्कन्दितत्वस्येव अप्रामाण्यानास्क-

न्दितत्वस्यापि प्रतीत्या यत्किंचिद्विषयेऽप्रामाण्यज्ञानानास्कन्दितत्वं शेखराभिप्रेतमित्यविरोधात् । न हि 'तुल्यास्यसूत्रशक्तिग्रहे अप्रामाण्यसन्देहेन' इति शेखरविरोधस्तदवस्थ एवेति वाच्यम्, प्रत्येकमाज्विषये हल्विषये च तुल्यास्य सूत्रजशक्तिग्रहस्याप्रामाण्यानास्कन्दितत्वेऽपि अज्झलोः सवर्णसंज्ञाबोधने 'नाज्झलौ' इति निषेधदर्शनाद्बाधकमस्तीति सम्भावनया तुल्यास्यसूत्रजशक्तिग्रहस्याप्रामाण्यज्ञानास्कन्दितत्वमिति सवर्णपदशक्तिग्रहस्याप्रामाण्यशङ्काकलङ्कितत्वम् । अतश्च सवर्णपदशक्तिनिर्णयाभावेन सवर्णपदघटितस्य 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यस्य वाक्यार्थबोधानुदय इत्याशयेनाविरोध इति यत्किंचिद्विषयेऽप्रामाण्यज्ञानाना स्कन्दितत्वं मूलकाराभिप्रेतमेवेति स्पष्टमेव विज्ञायते । अत एवाणुदित्स्वशास्त्रजबोधानापत्तिः इत्युक्तं शेखरे ॥ अथेदमुच्यते—कार्यकालपक्षाश्रयणेनैव परिभाषाणां सापादिकत्रैपादिकसकलविध्युपकारकत्वसम्भवे यथोद्देशपक्षाश्रयणं विफलमिति । अत्रैवं प्रत्युच्यते— नेदं वाक्यार्थचन्द्रिकोक्तं क्षोदक्षमम्, यतः 'अग्निमीळे तमीशाना सः—' इत्यादौ 'उदात्तादनुदात्तस्य—' इति विधीयमानस्वरितमादाय शेषनिघाताप्रवृत्तये 'अनुदात्तं पदमेकवर्जम्' इत्यस्य त्रिपाद्यामप्रवृत्तये यथोद्देशपक्षाश्रयणमावश्यकं भवति । न हि सन्निपात परिभाषायाः प्रवृत्त्या शेषनिघाताभावसिद्धिरिति यथोद्देशपक्षाश्रयणवैयर्थ्यंतादवस्थ्यम् । सन्निपातनिमित्तकविधित्वरूपलिङ्गेनोपतिष्ठमानायाः सन्निपातपरिभाषायाः तत्तच्छास्त्रीयविशिष्टवाक्यार्थबोधोत्तरं स्वनिमित्तभूतसन्निपातविघातकनिमित्तविधिं प्रति इदं निमित्तं न भवतीत्येवं विघातकविधेः निमित्तत्वाभावस्य बोधनीयतया परिभाषादृष्ट्या सन्निपातविघातकविधेरसिद्धत्वेन लिङ्गपरिज्ञानाभावात्सन्निपातपरिभाषायाः त्रिपाद्यामप्रवृत्तेः, प्रवृत्तावपि सन्निपातपरिभाषया वाक्यान्तरेण निमित्तत्वाभावबोधनात्प्रागेव सन्निपातनिमित्तकविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रेणासिद्धत्वप्रतिपादने पश्चात्सन्निपातनिमित्तकविधित्वस्य दुर्ज्ञेयतया तद्विघातकविध्यन्तरनिरूपितनिमित्ततासमर्पकत्वाभावस्य तद्गतस्य प्रतिपादयितुमशक्यत्वाच्च । न चैवं सन्निपातपरिभाषाया उपजीव्यविरोधन्यायमूलकत्वेन न्यायसिद्धतया सूत्रपाठगतसन्निवेशापेक्षपूर्वत्वोपहितशास्त्रसमर्पकेण तत्तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वग्रहणेन ग्रहीतुमशक्यतया सन्निपातपरिभाषादृष्ट्या त्रिपाद्या असिद्धत्वं दुर्वचमिति शङ्क्यम्, पुरुषारम्भसहायेनैव

भगवता भाष्यकारेण तत्र तत्र लोकन्यायानां शास्त्रव्यवस्थापकत्वोपवर्णनेन शास्त्रविषयतासम्पत्तये धर्मिग्राहकसाजात्यविशेषविषयतालाभार्थं च ज्ञापकापेक्षाया आवश्यकत्वेन त्रिसृणां चतसृणामित्यत्र नदन्तलक्षणङीपि दीर्घस्यानुपयोगेन 'न तिसृचतसृ' इति निषेधस्य सन्निपातपरिभाषाज्ञापकत्वम्, ज्ञापनानन्तरं च विभक्त्यानन्तर्यनिमित्तकस्य तिसृचतसृभावस्य सन्निपातविघातकङीबुत्पत्तिं प्रति निमित्तत्वायोगादृकारान्तयोस्तयोर्दीर्घवारणाय निषेधसार्थक्यमिति परिभाषाया ज्ञापकसिद्धत्वेनासिद्धत्वस्य सुवचत्वात्। न च बहिरङ्गत्वेन तिस्राद्यादेशस्य ङीप्यसिद्धत्वाङ्कीपोऽप्राप्तौ निषेधश्चरितार्थ इति न तस्य ज्ञापकत्वमिति शङ्क्यम्, 'वाचि ह्रस्वश्च' इति वक्तव्ये 'वामि' इति पृथग्योगकरणस्य सन्निपातपरिभाषाज्ञापकत्वात्। न च 'वाचि ह्रस्वश्च' इति न्यासेऽपि श्रुतनिमित्तनिमित्तिसन्निपातविघातवत् 'वामि' इति न्यासेऽपि तद्विघातस्य तुल्यत्वाद्वर्णविषयेऽपि यदागमन्यायप्रवृत्त्या अजादित्वविघाताभावेन ज्ञापकत्वस्य दुरुपपादत्वात् 'ङिति ह्रस्वश्च' इत्यत्र नित्यस्त्रीत्वसंबन्धः, 'वामि' इत्यत्र च अतिश्रियाम्, अतिश्रिणाम्, ब्राह्मणानामित्यादिसिद्ध्यर्थं तदसंबन्ध इति भाष्यसिद्धान्तव्याकोपापत्त्या तथाविधैकयोगस्य कर्तुमशक्यत्वाच्च सन्निपातपरिभाषाया ज्ञापकसिद्धत्वाभावे उपजीव्यविरोधन्यायमूलकत्वेन सर्वत्र प्रवृत्तौ निर्बाधत्वादसिद्धत्वाभावेन त्रिपाद्यां प्रवृत्तावपि अन्तोदात्तादुत्तरपदादन्यतरस्याम् 'ह्रस्वनुड्भ्यां मतुप्' इत्यन्तोदात्तोदात्तादिस्वरे कृते परमवाचा अग्निमानित्यादौ शेषनिघातो न स्यादिति सन्निपातपरिभाषाया स्वरविधावप्रवृत्तेः शेखरादावुक्तत्वेन 'अनुदात्तं पदम्—' इत्यस्य त्रिपाद्यामप्रवृत्तये यथोद्देशपक्षाश्रयणस्यावश्यकत्वात्। न च वाक्यार्थचन्द्रिकोक्तरीत्या 'अनुदात्तं पदमेकवर्जम्' इत्यस्य विधित्वाभ्युपगमेन त्रिपाद्यामप्रवृत्त्या 'अग्निमीळे' इत्यादौ शेषनिघातो नेति न दोष इति शङ्क्यम्, 'अनुदात्तं पदमेकवर्जम्' इत्यस्य विधित्वाङ्गीकारे क एको वर्जनीय इत्याकाङ्क्षायां सकलसूत्रविहितोदात्तस्वरितवर्जनापत्तौ 'आमलकीज' इत्यादावुदात्तचतुष्टयं श्रूयते, तत्र हि जातिलक्षणङीष्प्रत्ययस्वरेणोदात्तः आमलक्यां जात इति विग्रहे 'सप्तम्यां जनेर्डः' इति सूत्रविधीयमानडप्रत्ययस्य 'गतिकारक—' इति विधीयमानः कृत्स्वरः 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति पूर्वपदान्तोदात्तत्वम् 'अन्त्या-

त्पूर्वं बह्वृचः—' इति ळकाराकारस्योदात्तत्वमिति विरोधाभावाद्युगपदुदात्तचतुष्टयं स्यात् 'अनुदात्तम्पदम्—' इत्यस्य तु मकारादकारे अवकाशः स्यादिति विधित्वाङ्गीकारस्य दुष्टत्वात्। स्पष्टं चेदं सर्वं स्वरशेखरे 'अनुदात्तम्पदमेकवर्जम्' इत्यत्र षाष्ठप्रथमषष्ठाह्निके च कैयटे। नचैवं 'यथोद्देशत्वं त्वऽस्या न युक्तम्, अत्रैतत्सूत्रे कार्यकालं संज्ञापरिभाषमिति भाष्यविरोधात्, इति स्वरशेखरसिद्धान्तव्याकोप इति शङ्क्यम्, यथोद्देशमात्रपरताङ्गीकर्तृप्राचीनमतखण्डनपरत्वेन प्रवृत्तस्य तस्य ग्रन्थस्य यथोद्देशमात्रत्वं न युक्तमित्यङ्गीकारेणादोषात्। अत एव तत्र पूर्वमनुवादग्रन्थे 'यत्तु— यथोद्देशैवेयम्' इत्युक्तम्, 'अनुदात्तं पदम्—' इत्यस्य कार्यकालपक्षाश्रयणफलं तु तत्रैव स्वरशेखरे प्रदर्शितम्। यदि गोविन्दमतमनुरुन्धानः पूर्वं प्रति परासिद्धत्वेन विरोधाभावादेव त्रिपाद्यां न प्रवर्तत इति विप्रतिषेधपरिभाषाविषये यथोद्देशपक्षाश्रयणं विफलमिति वक्तुमारभेत, स एवं वक्तव्यः, विप्रतिषेधे परमेवेति नियमेन पूर्वशास्त्राप्रवृत्तेः पूर्वशास्त्रविषयरूपनिमित्तविरहेण पूर्वत्रेत्यस्याप्रवृत्तेः। न हि विप्रतिषेधाभावसम्पादनद्वारा 'पूर्वत्रासिद्धम्' इत्यस्य विप्रतिषेधशास्त्रप्रतिबन्धकत्वम्, उत पूर्वशास्त्राप्रवृत्तिसंपादनद्वारा विप्रतिषेधसूत्रस्य 'पूर्वत्रासिद्धम्' इत्येतत्प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहेणोभयोरपि श्रुतत्वेन विध्यङ्गत्वेन च समबलत्वादन्यतरेणान्यतरबाधायोगादुभयोरपि सावाकाशत्वेन पर्यायत्वाभावेन च परस्परविरोधाद्द्वयोरप्रवृत्त्यापत्तौ तदनन्तरं पूर्वपरशास्त्रयोर्मध्ये केन प्रवर्त्तितव्यमिति संशये प्रथमोपस्थितत्वात्पूर्वं प्रवृत्तिः पूर्वशास्त्रस्येत्येवंपरतया 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति सिद्धान्तात् मनोरथ इत्यादावुत्वसिद्ध्या विप्रतिषेधशास्त्रविषये यथोद्देशपक्षाश्रयणं विफलमिति वक्तुं शक्यते। परस्यासिद्धत्वे विप्रतिषेधशास्त्रस्य सिद्धत्वात् परिभाषान्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तौ त्रिपाद्यामुपस्थितेन 'पूर्वत्रासिद्धम्' इत्यनेन सह विरोधज्ञानानन्तरं परस्परं विरुद्धपरिभाषाद्वयमध्ये अन्यतरस्य प्रवर्तकं विनिगमकं किम्? इति जिज्ञासायां वाक्यार्थबोधनिश्चयानन्तरं तदुद्देशेनासिद्धताबोधनाय प्रवर्तमानपूर्वत्रासिद्धमित्येतदपेक्षया परशास्त्रातिरिक्तविषयकत्वेन पूर्वशास्त्रवाक्यार्थबोधनिर्णायकविप्रतिषेधशास्त्रस्यान्तरङ्गतया तेन प्रथमत एव परशास्त्रातिरिक्तविषयकत्वेनैव पूर्वशास्त्रवा-

कयार्थबोधस्य जनितत्वेन 'पूर्वत्रासिद्धम्' इत्यस्य निमित्ताभावेन स्वत एवाप्रवृत्तौ विप्रतिषेधशास्त्रस्य व्यवस्थापकत्वापत्त्या मनोरथ इत्यादावुत्वाद्यप्रसङ्गात्। न च 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इत्यनेन विप्रतिषेधशास्त्रस्य त्रिपाद्यामप्रवृत्तिबोधनादेव न दोष इति शङ्क्यम्, तेन तस्य यथोद्देशत्वस्यैव बोधनादिति शेखरेणैव समाहितत्वात्। न च 'पूर्वत्रासिद्धम्' इति सूत्रारम्भसामर्थ्यादेव मनोरथादौ न दोष इति विप्रतिषेधशास्त्रस्य यथोद्देशपक्षाश्रयणं व्यर्थमेवेति वाच्यम्, सापादिकदृष्ट्या त्रैपादिकस्यासिद्धत्वबोधनेनैव पूर्वत्रासिद्धसामर्थ्यस्योपक्षयात्। न च 'विप्रतिषेधे परं कार्यम्' इत्यनेन 'पूर्वत्रासिद्धम्' इत्यस्यैव प्राबल्यबोधनात्कथं विप्रतिषेधशास्त्रेण पूर्वत्रासिद्धशास्त्रस्य बाधः इति शङ्क्यम्, पूर्वत्रासिद्धशास्त्रविधेयस्य कस्यापि कार्यस्याभावेन तद्बाधासंभवात्। न चैवं परमेवेति नियमेन पूर्वशास्त्राप्रवृत्तौ पूर्वशास्त्रविषयरूपनिमित्तविरहेण पूर्वत्रासिद्धशास्त्रस्याप्रवृत्तौ असिद्धत्वाभावेन विप्रतिषेधशास्त्रस्य त्रिपाद्यां प्रवृत्तिर्दुर्वारेति शङ्क्यम्, कार्यकालपक्षे त्रिपाद्यां प्रवृत्तावपि यथोद्देशपक्षे त्रिपाद्यामप्रवृत्तेः। यदि यथोद्देशपक्षे त्रिपाद्यां प्रवृत्तिर्दुर्वारा इत्युच्येत, तर्हि पूर्वत्रासिद्धशास्त्रस्य वैयर्थ्यं स्यादुरपलपम्। न हि सापादिकदृष्ट्या त्रैपादिकासिद्धत्वसम्पादनेन तत्सार्थक्यमिति युज्यते वक्तुम्, विप्रतिषेधशास्त्रप्राबल्ये कथं वा भवेत्सापादिकदृष्ट्या त्रैपादिकासिद्धत्वम्। यद्यारम्भसामर्थ्यमाश्रित्य तत्समर्थ्यते, तर्हि कार्यकालपक्षपर्यन्तानुधावनेनैव तत्समर्थ्यताम्। न चैवं विप्रतिषेधशास्त्रस्य विधायकत्वाङ्गीकारेण त्रिपाद्यामप्रवृत्तिः सूपपादा। शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्तिसंभवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम्, तत्र कृते यदि पूर्वप्राप्तिस्तर्हि तदपि भवत्येवेति पुनःप्रसङ्गविज्ञानसिद्धिः, इति सिद्धान्तात्परशास्त्रविहितकार्यस्य प्राबल्यबोधनपरतया विप्रतिषेधशास्त्रप्रवृत्तेः सर्वसम्मतत्वात्परशास्त्रप्रवृत्त्युपयोगितया परशास्त्रोपकारकत्वेन परशास्त्राङ्गमेवेति विध्यङ्गत्वस्यैव वक्तव्यतया अङ्गित्वरूपस्योपकार्यापरपर्यायस्य विधित्वस्य दुर्वचत्वात्, साक्षाल्लक्ष्यसंस्कारकत्वाभावेन परिभाषात्वस्यैव स्वीकर्तुमौचित्याच्च, 'द्वयोस्तुल्यबलयोरेकःप्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति' इति भाष्यबोधितदृष्टान्तबलेन प्रेष्यवृत्तिधर्मस्याप्राधान्यस्यैव

विप्रतिषेधशास्त्रविषये स्पष्टप्रतीतेश्च, स्वतन्त्रविधायकत्वे कदाचिदपूर्वविधायकं कदाचिन्नियामकमिति वक्तुमशक्यत्वेन सकृद्गतिन्यायपुन:प्रसङ्गविज्ञानासिद्धिप्रसङ्गाच्च । परिभाषात्वे तु अपूर्वविधायकं नियामकं भवतीत्यपूर्वविधायकत्वे पुन:प्रसङ्गविज्ञानसिद्धिः, नियामकत्वे सकृद्गतिन्यायसिद्धिः, इति स्पष्टमेवाभीष्टं सिध्यति । विधायकत्वे तु यदा नियामकत्वं तदा न विधायकत्वप्राप्तिरिति न सिध्येदेव निर्दिष्टंन्यायद्वयम् । अपि च स्वतन्त्रविधित्वे विप्रतिषेधशास्त्रस्य पूर्वत्रासिद्धशास्त्रारम्भसार्थक्यान्यथानुपपत्त्या त्रिपाद्यां पूर्वं प्रति परासिद्धत्वेऽपि विप्रतिषेधविधिबलात्सापादिकशास्त्रदृष्ट्या त्रैपादिकासिद्धत्वस्य दुर्वचत्वापत्तिः । यदि 'पूर्वत्रासिद्धम्' इति शास्त्रस्यापि विधायकत्वमेवाभ्युपगम्य समीहितसिद्धिरित्युच्यते, तर्हि सापादिकदृष्ट्या त्रैपादिकस्यासिद्धत्वसिद्धावपि 'अबाधेन—' इतिन्यायेन—प्रतिषेधविधेः त्रिपाद्यां प्रवृत्तेर्दुर्वारतया त्रैपादिकेषु पूर्वं प्रति परासिद्धत्वस्य वर्षसहस्रेणापि वक्तुमशक्यता । यदि हि 'पूर्वत्रासिद्धम्' इति शास्त्रस्यापि पूर्वत्वावच्छिन्नशास्त्रत्वमेव लिङ्गं भविष्यतीति लिङ्गेनोपतिष्ठमानतया परिभाषात्वमेवाङ्गीकुर्वन् त्रैपादिकेष्वपि तस्य प्रवृत्तिः निराबाधेति वक्तुमाशंसेत, स प्रतिवक्तव्यः; सापादिकेष्वपि पूर्वं प्रति परासिद्धत्वमुपहन्तुमुपायः परमन्वेषणीय इति । यदि मध्ये पाठस्य विप्रतिषेधसूत्रारम्भस्य च सामर्थ्यमुपजानानः सापादिकेषु परस्परमसिद्धत्वमपहन्ति, तर्हि विनिगमनाविरहात्त्रिपाद्यामपि क्वचिदप्रवृत्त्यापत्तिः । किंच 'दादेः—' इत्याद्यपवादसूत्रैकवाक्यतापन्नपूर्वपदार्थे पूर्वत्वोपलक्षितधर्मावच्छिन्ने 'होढः' इत्याद्युत्सर्गातिरिक्तत्वेन यथा संकोचः, न तथा वक्तुमौचित्यं परिभाषात्वे । किंच 'पूर्वत्रासिद्धम्' इति शास्त्रस्य परिभाषात्वे 'कार्यकालं संज्ञापरिभाषम्' इति परिभाषाविषये कार्यकालपक्षोपपादकस्य परिभाषान्तरारम्भस्यानुत्थितिरेव स्यात् । अत एव 'विप्रतिषेधे—' इत्येषा यथोद्देशैव' इति सन्धिशेखरे स्पष्टम् । एवं समर्थपरिभाषायाः त्रिपाद्यामप्रवृत्तिरपि यथोद्देशपक्षाश्रयणफलम् । 'ऋते च तृतीयासमासे' इति वार्त्तिकस्थं समासग्रहणमपि एकादेशरूपवार्णकार्येषु समर्थपरिभाषा न प्रवर्तते इत्येव बोधनपरम् । अत एव 'पदान्ताद्वा' इत्यत्रत्यमन्तग्रहणं सार्थकम्, अन्यथा सामान्यतो वर्णकार्येषु समर्थपरिभाषायाः प्रवृत्तिरेव नास्तीत्यङ्गीकारे 'तिष्ठतु कुमारी छत्रं हर' इत्यादौ

तेनैव तुकः सिद्धिरित्यन्तग्रहणमनर्थकं स्यात्। मम तु, एकादेशरूपे वार्णकार्ये समासग्रहणेन समर्थपरिभाषाप्रवृत्त्यभावबोधनेऽपि अनेकादेशे तुकि समर्थपरिभाषायाः निष्कम्पं प्रवृत्तिः स्यादिति पदान्तविधित्वमस्य, न पदविधित्वमिति बोधनद्वारा समर्थपरिभाषाप्रवृत्तिं प्रतिहन्तीति सर्वथा तत्सार्थकम्। 'समासेऽङ्गुलेः सङ्गः' इत्यत्रत्यं समासग्रहणं तु यत्र तु भावकार्यस्य विधेयत्वं तत्रैव प्रवर्तते समर्थपरिभाषेति ज्ञापनपरमिति न तस्यानर्थक्यम्। 'न पदान्ताट्टोरनाम्' इत्यत्रत्यमन्तग्रहणं तु पदत्वेन हेतुत्वेऽप्युद्देश्यताविरहादनामिति ज्ञापकाच्च भावकार्यस्य विधेयत्वाभावाच्च न प्रवर्तते समर्थपरिभाषेति स्पष्टार्थमेव भवत्यन्तग्रहणम्, स्पष्टश्चायमर्थः सन्धिशेखरे। 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेन समासग्रहणस्य वार्णकार्येषु समर्थपरिभाषाप्रवृत्त्यभावज्ञापकत्वं न युक्तं वक्तुम्, अन्तग्रहणानर्थक्यसंभवरूपेण बाधकेन वार्णकार्यसामान्ये न प्रवर्तते समर्थपरिभाषेति वक्तुं व्याघातात्। मम तु एकादेशरूपे वार्णकार्ये न प्रवर्तते इत्येवमर्थं समासग्रहणं ज्ञापयतीति नान्तग्रहणस्यानर्थक्यं प्रसज्यते इति न दोषः। न हि वार्तिकस्थेन समासग्रहणेन सौत्रस्यान्तग्रहणस्य प्रत्याख्यानं युज्यते, अबाधेनैवोपपत्तौ बाधकल्पनस्यान्याय्यत्वात्। एवमन्तरङ्गपरिभाषायाः त्रिपाद्यामप्रवृत्तये यथोद्देशपक्षाश्रयणम्, त्रैपादिकानामसिद्धत्वेनान्तरङ्गशास्त्रत्वरूपलिङ्गपरिज्ञानासम्भवात्त्रिपाद्यां प्रवृत्तेर्दुर्वचत्वात्। तत्फलं तु राज्ञ इत्यादौ श्चुत्वसिद्धिः। अधिकं त्वन्तरङ्गपरिभाषाव्याख्यानावसरे निरूपयिष्यामः॥ अलोन्त्यपरिभाषा तु यथोद्देशे सापादिकोपकारिका, कार्यकाले तु त्रैपादिकोपकारिका, इति निष्कर्षः। यतो वाक्यार्थैकवाक्यतयैव नियामिकेत्यङ्गीक्रियते। ततश्च तदुपकारतः पूर्वं 'पूर्वत्रासिद्धम्' इत्यनेन बाधायोगेन त्रैपादिकविधिना आकर्षणं भवति दुर्वारम्। परिभाषान्तराणामिव तस्याश्चाकर्षणं दुर्वारम्। एतेन 'हलोऽनन्तराः संयोगः' इत्यादीनां ज्ञापकत्वमुपवर्णयन् वाक्यार्थचन्द्रिकाकारः प्रत्युक्तः। 'संयोगे गुरु' इत्यादौ सापादिके संयोगपदशक्तिग्राहकत्वेन चारितार्थ्ये ज्ञापकत्वायोगात्। न च वाक्यैकवाक्यतयान्वयवती बहिरङ्गा सा—' इति शब्दरत्नेन 'अलोन्त्यस्य' इत्यस्य वाक्येकवाक्यतैव स्वीकृतेति शङ्क्यम्, तत्रत्यशब्दरत्नस्य कौस्तुभानुयायित्वेनाविरोधात्। 'सार्वधातुकार्धधातुकयोः' इत्या-

दौ ‘अङ्गस्य’ इत्यादिसम्बन्धविशेषानिर्णयेन स्थानेपदोपस्थितौ गुणपदावच्छिन्नविधेयताप्रयोजकगुणपदघटितत्वेनेक्पदोपस्थितौ स्थानेपदप्रयोज्यनिवर्त्यनिवर्तकभावसम्बन्धप्रतियोगिषष्ठ्यन्तघटितत्वेनान्त्यालपदोपस्थितौ विशेषणविशेष्यभावेन इग्रूपस्यान्त्यालः स्थाने गुणो भवतीति वाक्यार्थः परिष्कृतो भवति। एवं ‘आद्यन्तौ टकितौ’ इत्येतस्यापि टित्किदेतदन्यतरनिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकपदघटितशास्त्रेण विधीयमानं कार्यं आद्यवयवत्वान्त्यावयवत्वैतदन्यतरधर्मावच्छिन्नविधेयतास्कन्दितमेव भवति, इत्यर्थेनार्थिकनिषेधपराद्यावयवान्त्यावयवैतदन्यतरदलोपस्थितिरिति वाक्यार्थैकवाक्यतया विध्युपकारकत्वम्। अत एव ‘प्रत्ययपरत्वं तु परत्वादमुं बाधते’ इति शेखरः संगच्छते, अन्यथा ‘प्रत्ययः’ ‘परश्च’ इत्यनयोर्वाक्यैकवाक्यतया अन्वयस्य वक्ष्यमाणत्वेन वाक्यार्थबोधात्पूर्वमेव प्रवृत्तेः ‘आद्यन्तौ—’ इत्यस्य वाक्यैकवाक्यतयान्वये वाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोर्यौगपद्याभावादसंगतः स्यात्। अनेन ‘अयुक्तमिदम्’ इति शेखरखण्डने प्रवृत्तो राघवेन्द्राचार्यः प्रत्युक्तः। ‘मिदचोऽन्त्यात्परः’ इत्यस्यापि विधीयमानो मित् मिदुद्देश्यभूतसमुदायघटकचरमवर्णावधिकपरत्ववानेव मिदुद्देश्यभूतसमुदायचरमावयव एव भवति, इत्यर्थेन अन्त्याचः पर इति आर्थिकनिषेधपरपदोपस्थितिरिति वाक्यार्थैकवाक्यतया विध्युपकारकत्वम्। एवं ‘षष्ठी स्थाने योगा’ इत्यस्यापि संबन्धविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वप्रकारकसन्देहविशेष्या षष्ठी स्थानेपदप्रयोज्यसंबन्धार्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वप्रकारकनिश्चयविशेष्यैव भवति, इत्यर्थेन स्थानेपदप्रयोज्यसंबन्धान्यसम्बन्धाभावबोधकस्थानेपदोपस्थितिरिति वाक्यार्थैकवाक्यतया विध्युपकारकत्वम्, स्थानेपदार्थविचारस्तु अस्मदीये शब्देन्दुशेखरव्याख्याने मरीचिमालाभिधाने द्रष्टव्यः॥ ‘आदेः परस्य’ इत्यस्यापि परबोधकशब्देन परस्य स्थाने विधीयमानं कार्यमादेरल एव बोध्यमिति, इत्यर्थेनार्थिकनिषेधपरपदोपस्थितिरिति वाक्यार्थैकवाक्यतया विध्युपकारकत्वम्। एवं ‘अनेकाल् शित्सर्वस्य’ इत्यस्यादेशविधायकसूत्रोपात्तानेकाल्वृत्तिधर्मावच्छिन्नानुपूर्व्यवच्छिन्नविधेयताश्रयः शित्वावच्छिन्नविधेयताश्रयश्च सर्वस्यैव स्थाने भवति, इत्यर्थेनार्थिकनिषेधपरसर्वस्येति विशेषणदलोपस्थित्या जराशब्दान्ताङ्गावयवस्य सर्वस्य स्थाने जरसादेशो भवतीति

रीत्या वाक्यार्थैकवाक्यतयैव विध्युपकारकत्वम्। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यस्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तघटितशास्त्रेण विधीयमानं कार्यमव्यवहितपूर्वसम्बन्ध्येव भवति, इत्यर्थेनार्थिकनिषेधपरपरस्मिन्निति विशेषणदलोपस्थित्या इकः स्थाने यण् स्यादचि परे इत्येवंरीत्या वाक्यार्थैकवाक्यतयैव विध्युपकारकत्वम्। एवं 'तस्मादित्युत्तरस्य' इत्यस्यापि आर्थिकनिषेधपरपरस्येतिपदोपस्थितिरिति वक्यार्थैकवाक्यतयैव विध्युपकारकत्वम्। 'इको गुणवृद्धी' इत्यत्र तु गुणवृध्द्यन्यतरपदघटितशास्त्रेण विधीयते यत्र गुणवृद्धी तत्र इक इति पदमुपतिष्ठते, इत्यर्थेन इक्पदोपस्थितिरिति पदैकवाक्यतया विध्युपकारकत्वम्। एवं 'अचश्च' इत्यस्यापि ह्रस्वदीर्घप्लुतान्यतमपदावच्छिन्नविधेयताप्रयोजकह्रस्वदीर्घप्लुतान्यतमपदघटितशास्त्रेण विधीयते यत्र कार्यं तत्र अच इति पदमुपतिष्ठते, इत्यर्थेनाच्पदोपस्थितिरिति पदैकवाक्यतया विध्युपकारकत्वम्। एवं 'समर्थः पदविधिः' इति परिभाषा, यत्र पदविधिः तत्र समर्थ इत्युपतिष्ठते, इति पदैकवाक्यतया विध्युपकारिका। 'उरण् रपरः' इत्यस्यापि ऋवर्णवृत्तिप्रायोगिकश्रावणप्रत्यक्षविषयताप्रतिबन्धकोऽण् रपर एव भवति, इत्यर्थेन रपर इति पदोपस्थितिरिति पदैकवाक्यतया विध्युपकारकत्वम्। एवमन्यत्राप्यूह्यम्॥ परे तु— 'इको गुणवृद्धी' इत्यादीनामपि इक एव भवति, इत्याद्यर्थेनार्थिकनिषेधपर इक इत्यादिविशेषणदलोपस्थितिरिति वाक्यार्थैकवाक्यतया विध्युपकारकत्वम्। एवमेव 'अनुदात्तं पदमेकवर्जम्' 'विप्रतिषेधे परं कार्यम्' 'वा सरूपो स्त्रियाम्' इत्यादीनामित्याहुः॥ ननु संज्ञाशास्त्रेण च नावच्छेदकावच्छिन्ने शक्तिग्रहः संभवति व्यक्तिपक्षे, अपितर्हि शब्दस्वरूपविशेष एव, इति संज्ञासूत्रस्थसंज्ञापदेन लौकिक्या शक्त्या शब्दस्वरूपे उपस्थापिते, शब्दस्वरूपव्यक्तिः केति जिज्ञासोदयात्संज्ञाविषयेऽपि यथोद्देशपक्षे गुणाकाङ्क्षया प्रधानाकाङ्क्षोपपद्यते। एवं कार्यकालेऽपि विधिप्रदेशे विधिगतपदेनापेक्षिते स्वशक्तिग्राहकशास्त्रे संज्ञाशास्त्रोपस्थितौ तत्पदशक्तिग्रह इति प्रधानाकाङ्क्षया गुणाकाङ्क्षेत्याकाङ्क्षाभेदेन पक्षभेद इति वक्तुं शक्यते। कार्यकालपक्षे संज्ञाशास्त्रस्यापि पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावात्स्वदेशे पूर्वं वाक्यार्थबोधे प्रदेशे उपस्थापकतया चारितार्थ्येन वृध्द्यादिपदानर्थक्याभावाद्विधिभिः सहैकवाक्यता संभवति। यथोद्देशकार्यकालयोरुभयोरपि एकदेशस्थत्वं संज्ञाशास्त्राणामेव भवति। प-

रिभाषाविषये कार्यकालपक्षे उपेक्षाबुद्ध्या परिभाषादेशजनितसंस्कारस्य लोपाद्विधिदेश एव पुनर्वाक्यार्थबोध इति विधिदेशस्थत्वेनासिद्धत्वस्याप्रसक्तिः, इत्यभिप्रायकपूर्वत्रासिद्धमिति सूत्रस्थभाष्यप्रामाण्येनोपेक्षाबुद्धिः संभवतीति कार्यकालपक्षे विधिदेशस्थत्वमेव परिभाषाणाम्, न स्वदेशस्थत्वमित्येकदेशस्थत्वव्याहतिरिति परिभाषाविषय इत्युक्तेर्न्यूनतैवेत्यत आह— एतदेवेति ॥ परिभाषाशास्त्रमेवेत्यर्थः । एवेन संज्ञाशास्त्रव्यावृत्तिः । यत्तु— एतदेवेति प्रतीकमुपादाय 'पक्षद्वयेऽप्येकवाक्यतासत्त्वादेव' इति भैरवमिश्रो व्याचकार, तत्तुच्छम्; अभिप्रेत्यन्वीयमानकर्मतासमर्पकपदान्तराध्याहारप्रसङ्गात्, पक्षद्वयेऽप्येकवाक्यतैव भाष्याभिमतेति एकवाक्यतासमर्थनायैवैतदेवेत्यादिग्रन्थप्रवृत्तेः 'पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः' इत्यग्रिमग्रन्थेन बोधनादेकवाक्यतासमर्थकवाक्ये एकवाक्यतासत्वादेवेति एकवाक्यतासत्वहेतुत्वप्रतिपादनस्य मौढ्यावलीढत्वाच्च, यच्च— एतदेवेति प्रतीकमुपादाय 'यथोद्देशेऽप्येकवाक्यत्वमित्यर्थः' इति, तदपि रभसात् । परिभाषाशास्त्रेष्वेवैकवाक्यतासमर्थनाय ग्रन्थप्रवृत्तेः 'कश्चित्परिभाषारूप इति कैयटः' इत्युत्तरग्रन्थेन बोधनेन तस्य व्याघातात्, यथोद्देशेपीत्यर्थलाभप्रकारस्य वर्षसहस्रेणापि प्रतिपादयितुमशक्यत्वाच्च । यत्तु— परिभाषादेश एव विध्येकवाक्यत्वमित्यर्थः' इति सर्वमङ्गलाकारः तदप्यज्ञाननिबन्धनम्, कार्यकालपक्षे संज्ञाशास्त्रस्यापि विध्येकवाक्यत्वमित्यङ्गीकारेण एवकारव्यावर्त्याभावात्, परिभाषादेशे वा विधिदेशे वेति वैलक्षण्यस्य ग्रन्थकारानभिमतत्वेन परिभाषादेश एवेत्युक्तेर्व्याहतत्वाच्च, तद्रीत्या कार्यकाले विधिदेशे विध्येकवाक्यत्वस्यैव दृष्टत्वात्परिभाषादेश एवेत्युक्तेस्तद्विरोधापत्तेश्च, परिभाषादेश एव विध्येकवाक्यत्वे यथोद्देशपक्ष एव पर्यवसानेन 'एतच्च पक्षद्वयसाधारणं भाष्यम्' इत्यग्रिमग्रन्थविरोधापत्तेश्च, 'तत्त्विह सिद्धम्' इति 'पूर्वत्रासिद्धम्' इति सूत्रस्थभाष्यसिद्धान्तव्याकोपापत्तेश्च । यत्तु— एतदेवेत्यस्य 'पक्षद्वयेऽपि पदैकवाक्यतयैव नियमः इत्येतदेवेत्यर्थः' इति तन्न विचारचारुतरम् । अन्यतरपक्षे पदैकवाक्यतया नियमस्य एवकारव्यावर्त्यत्वे संज्ञाशास्त्रव्यावृत्तिप्रदर्शनपर 'कश्चित्परिभाषारूप इति कैयटः' इति ग्रन्थस्वारस्याभावप्रसङ्गात्, 'एतच्च पक्षद्वयसाधारणं भाष्यं पक्षद्वयेऽपि

**त्रिप्रकारः— कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति—' इति 'षष्ठी स्थाने—' [ १-१-४९ ] इति सूत्रे भाष्ये उक्तम् । 'अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूपः—' इति कैयटः । दीपो यथा**

---

प्रदेशैकवाक्यतायाः इतः प्रतीतेः' इत्यग्रिमग्रन्थानवकाशापत्तेश्च ॥ **अधिकारो नाम त्रिप्रकार इति** ॥ नामेति प्रसिद्धौ, अधिकारत्वेन प्रसिद्धस्त्रिप्रकार इत्यर्थः । तत्रैकः 'कश्चिदेकदेशस्थः—' इत्यादिना मूल एवोक्तः । द्वितीयस्तु, यथा रज्वायसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेणेति 'ग्रन्थान्ताधिके च' इत्यादौ चकारेणानुकृष्टः 'सहस्य सः' इत्यादिरूपः । तृतीयस्तु, चकारमन्तरेणापि 'योगे योगे उपतिष्ठत, इति 'अङ्गस्य' इत्यादिरूप इति विवेकः ॥ **कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयतीति** ॥ पक्षद्वयेऽपि परिभाषाशास्त्रं स्वदेशे वर्तमानं सत्– पाणिनिसूत्रसमुदायरूपे शास्त्रे सर्वं प्रदेशतुल्यं सापादिकं त्रैपादिकं च योग्यं विधिशास्त्रं प्रज्वलयति, एकवाक्यतया निष्पादयतीत्यर्थः ॥ **यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति** ॥ स्वदेशस्थ एव दीपः स्वाश्रये गृहे योग्यं सर्वं प्रदेशं यथा प्रकाशयति तथेत्यर्थः । आर्थिकनिषेधपरस्वविधेयविशेषणदलोपस्थित्या स्वविधेयपदोपस्थित्या वा विधिशास्त्रीयलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिवाक्यार्थबोधप्रयोजकस्य परिभाषाशास्त्रस्य पक्षद्वयेप्युपकार्योपकारकभावज्ञानाय स्वदेशे वाक्यार्थबोध इत्यङ्गीकारात्परिभाषाविषय एव पठितदेशस्थेन परिभाषाशास्त्रेण तत्र तत्र लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगिबुद्धिजननमित्येकदेशस्थत्वसंभव इति भाष्याशय इति भावः ॥ ननु संज्ञाशास्त्राणां स्वदेशे वाक्यार्थबोधाविशेषादेकदेशस्थत्वं संभवतीति तद्विषय एव प्रकृतभाष्यं लापयितुं शक्यम्, विनिगमनाविरहात् इत्यत आह— **अधिकारशब्देनेति** ॥ 'अधिकारो नाम' इति भाष्यस्थेनाधिकारशब्देनेत्यर्थः ॥ **पारार्थ्यादिति** ॥ लक्ष्यसंस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधप्रयोजकत्वादित्यर्थः ॥ **परिभाषाप्युच्यत इति** ॥ अपिशब्दश्चात्रोक्तस्योभयस्यैव समुच्चायकः ॥ **कश्चित्परि-**

भाषारूप इति ॥ ‘कश्चिदेकदेशस्थः’ इति भाष्यस्थकश्चित्पदेन परिभाषाशास्त्राणामेव ग्रहणम्, न तु संज्ञाशास्त्राणामित्यर्थः । येन कैयटेन गृहीतपरिभाषार्थेन व्यवहार इत्यभिप्रेतं तेनैव ‘षष्ठीस्थाने—’ इति सूत्रभाष्यव्याख्यानावसरे दत इत्यादौ जश्त्वादिप्रतिबन्धरूपाशास्त्रीयकार्येऽपि भत्वादिसिद्धये संज्ञाशास्त्रविषये विध्येकवाक्यतया वक्तुमशक्यत्वात् ‘मृजेर्वृद्धिः’ इत्यादिसूत्रस्थवृद्ध्यादिपदानामुपस्थापकतया चारितार्थ्येनोपस्थितपदार्थेऽन्वये मानाभावादिकपरिभाषायाः तत्रोपस्थित्यनापत्तौ कार्यकालपक्षे पदैकवाक्यतया वक्तुमशक्यत्वाच्च, यथोद्देशपक्षे संज्ञाशास्त्रस्य स्वदेशे वृद्धिपदेनावच्छेदकावच्छिन्नं शब्दस्वरूपं वृद्धिपदादिकं गृहीत्वा सकलविधिसूत्रस्थवृद्धिपदशक्तिसंभवाद्विधिसूत्रस्थवृद्ध्यादिपदैः तंतमर्थमुपस्थाप्य तत्तद्विधिवाक्यार्थबोध इति भाष्यसिद्धान्तितजातिपक्षाश्रयणेनैव संज्ञाशास्त्रेष्ववच्छेदकावच्छेदेन शक्तिग्रहः इति ‘वृद्धिरादैच्’ इत्यादीनां ‘आदैचो वृद्धिपदवाच्या’ इति वाक्यार्थबोधानन्तरं भाविफलानुसन्धानात्सार्थक्यबुद्ध्या स्वदेश एव दृढतरसंस्कारोत्पत्तौ ‘वृद्धिरादैच्’ इत्यादौ वृद्धिपदश्रवणे एकसम्बन्धिज्ञानविधया आदैचामुपस्थितिर्भवतीति वा, संज्ञाविषये गुणाकाङ्क्षया प्रधानाकाङ्क्षोत्थापनासंभवाच्च, व्यक्तिपक्षेऽपि वृद्ध्यादिपदानामादैजादिषु शक्तिरिति ज्ञाते वृद्ध्यादिपदघटितविधिविषयकाकाङ्क्षाया उत्थाप्यतया उत्थापितगुणाकाङ्क्षया प्रधानाकाङ्क्षोत्थापनस्यानौचित्याच्च, संज्ञाशास्त्राणां कार्यकालपक्षे स्वदेशे वाक्यार्थबोधे तद्देशस्थत्वसम्पत्त्या अष्टाध्यायीपाठकृतमेव पूर्वत्वं परत्वं चाश्रयितुं शक्यत इति विधिदेशस्थत्वानापत्त्या स्मरणेनैव सर्वत्र निर्वाहे कार्यकालपक्षाश्रयणस्यानावश्यकतया परिभाषायां ‘कार्यकालं संज्ञापरिभाषम्’ इति संज्ञापदग्रहणानर्थक्यापत्तेश्च, स्वदेशे वाक्यार्थबोधे अयादीनां परत्वस्य दुर्वारतया प्रगृह्यसंज्ञायाः अष्टाध्यायिपाठकृतं पूर्वत्वमेव स्यादिति ‘अयादिभ्यः पैरव प्रगृह्यसंज्ञा, इति ‘अदसो मात्’ इति सूत्रस्थभाष्यासंगतेश्च । संज्ञाशास्त्रविषये एकदेशस्थत्वं नोपपद्यते इति परिभाषाशास्त्रविषय एव पूर्वोक्तवाक्यभेदमनङ्गीकृत्य वाक्यार्थैकवाक्यतया पदैकवाक्यतया वा विध्युपकारः सम्पद्यत इति पठितदेशस्थत्वेनैकदेशस्थत्वमुपपन्नं भवतीत्यभिप्रेतमिति भावः ॥ ननु ‘परिभाषाप्युच्यते’ इति कैयटे अपिशब्देन पारार्थ्यस्य संज्ञाविषयेऽपि तुल्यतया संज्ञाशास्त्रस्याप्यधिकारशब्देन ग्रहणमिति बोधनाद्यथोद्देशे स्वदेशे

**प्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारक**

---

वाक्यार्थस्य सत्वात्तदर्थोपस्थित्यैव सर्वप्रकाशकत्वस्य संज्ञाशास्त्रेषु सुवचत्वेन संस्कार्यविधीनामनेकत्वात् युगपच्छ्रोतृबुद्ध्यनारोहे स्वदेशे गृहीतस्य वाक्यार्थबोधस्य विधौ स्मरणमात्रेण संस्कार इत्यभिप्रायेणैकदेशस्थः इत्युक्तेरुपपत्त्या स्वार्थस्मृतिद्वारा सर्वशास्त्रोपकारकमिति प्रदीपदृष्टान्तसङ्गतेश्च संज्ञापरिभाषासाधारण्येन प्रकृतभाष्यं लापयितुं शक्यत इति भाष्यस्य परिभाषामात्रविषयकत्वकल्पनमयुक्तमिति 'एतदेव' इति पूर्वग्रन्थोऽसङ्गत एवेत्यत आह— **दीपो यथा प्रभाद्वारेति** ॥ प्रभाप्रसरणद्वारेत्यर्थः ॥ **सर्वगृहप्रकाशक इति** ॥ गृहपदं गृहस्थप्रदेशपरम् । स्वाश्रयेत्यादिः, स्वाश्रयगृहस्थितयोग्यसर्वप्रदेशप्रकाशक इत्यर्थः ॥ **एवमिति** ॥ दीपः स्वजन्यप्रभाजन्यप्रसरणद्वारा यथा स्वाश्रयगृहस्थितयोग्यसर्वप्रदेशप्रकाशकस्तथेत्यर्थः ॥ **एतदिति** ॥ परिभाषाशास्त्रमित्यर्थः ॥ **स्वबुद्धिजननद्वारेति** ॥ **स्वं** = परिभाषाशास्त्रम्, तस्य **बुद्धिः** वाक्यार्थबोधः, जन्यते येनेति जननं करणे ल्युट्, उत्पत्तिसाधनमित्यर्थः । तथाच परिभाषाशास्त्रजन्यवाक्यार्थबोधः उत्पत्तिसाधनं यस्येपि व्युत्पत्त्या स्वजन्यवाक्यार्थबोधजन्यार्थिकनिषेदपरविशेषणदलोपस्थितिद्वारा स्वजन्यवाक्यार्थबोधजन्यपदोपस्थितिद्वारा वा, इति फलितोऽर्थः । एवं च प्राचीनोक्तयथोद्देशपक्षस्य नावकाशलेशोऽपीति बोध्यम् ॥ **सर्वशास्त्रोपकारकमिति** ॥ पाणिनीयसूत्रसमुदायरूपशास्त्रस्थयोग्यसापादिकत्रैपादिकविध्युपकारकमित्यर्थः । एवं च दीपस्थानीयं परिभाषाशास्त्रं प्रभास्थानीयो वाक्यार्थबोधः प्रसरणस्थानीया विशेषणदलोपस्थितिः स्वघटकपदोपस्थितिर्वेति फलितम् ॥ यत्तु— 'स्वबुद्धीतिप्रतीकमुपादाय स्वबुद्धिजन्याकाङ्क्षामूलकोपस्थितिविषयविध्येकवाक्यताद्वारेति भावः' इति सर्वमङ्गलाकारः, तन्मरुमरीचिकाप्रमाणविचारपर्यायमिति परिपरिकत्थनं पारेपातालं पात्यते । स्वबुद्धिजन्याकाङ्क्षामूलकोपस्थितिविषयविध्येकवाक्यताद्वारेति पण्डितभाषितेन गुणाकाङ्क्षया विध्याकाङ्क्षाया एव स्पष्टं प्रतीतेः यथोद्देशपक्ष एव स्वीकृतः न पुनः कार्यकालः अतश्च 'एतच्च पक्षद्वयसाधारणं भाष्यम्' इत्युत्तरग्रन्थानभिज्ञाविद्वद्गोष्ठीमात्राभिनन्द्यं स्यादिति । अपि च एकवाक्यतामन्तरापि सकलशास्त्रोपकारकत्वमभिप्रयतां प्राचीनानां प्रत्यव-

मिति तत्तात्पर्यम् ।

---

स्थाने पण्डितं मन्यस्य शपथमात्रमथ मूकीभावो वा स्यात्प्रत्युत्तरमिति नेद‍मुक्तमर्थवर्णनं वैयाकरणहृदयमधिशेताम् ॥ यत्तु—' स्वस्यात्मीयस्याव्यवहितस्य पूर्वस्येत्याद्यंशस्य या विशिष्टविध्यर्थघटकतया बुद्धिः तज्जननद्वारेत्यर्थः, पदैकवाक्यतया वाक्यार्थबोधसम्पादनद्वारेति यावत्' इति वाक्यार्थचन्द्रिकाकारः एकवाक्यतामन्तराप्यव्यवहितस्येत्याद्यंशस्य विधिप्रदेशे स्मरणेन विशिष्टविध्यर्थघटकत्वं नापलपितुं शक्यम्, इति मशककदम्बकमिव मदकलं कलभं प्राचीनकुलमुपरुन्धानमफलोद्यमम्, इति तदश्रद्धेयमेवेत्यास्ताम् ॥ तत्तात्पर्यमिति ॥ ' षष्ठीस्थान—' इति सूत्रभाष्यस्थ ' अधिकारो नाम—' इत्यादिभाष्यव्याख्यानपरकैयटतात्पर्यमित्यर्थः । संज्ञाशास्त्रेषु प्रथमं वाक्यार्थबोधः, अनन्तरं शक्तिग्रहः, तदनन्तरं संस्कारः, ततः स्मरणम्, इति दीपप्रभाप्रसरणात्मकत्रितयापेक्षया आधिक्येन दृष्टान्तवैषम्यात् न तेषां कश्चित्पदोपादेयता सम्भवति, परिभाषाशास्त्रेषु पुनः स्व, स्ववाक्यार्थबोधविधेवोपस्थित्यात्मकत्रितयमादाय दृष्टान्तसाम्यात् कश्चित्पदोपादेयत्वं सूपपादम् । कथंचिदेकदेशस्थेत्यादिभाष्यस्य संज्ञापरिभाषासाधारण्यकल्पनाग्रहे तु प्रकारचतुष्टयं स्यादिति त्रिप्रकारत्वप्रतिपादनपर ' अधिकारो नाम त्रिप्रकारः—' इति भाष्यस्वारस्यभङ्गः । संज्ञामात्रविषयत्वकल्पने तु ' परिभाषा पुनरेकदेशस्था सती कृत्स्नं शास्त्रमभिज्वलयति प्रदीपवत्' इति समर्थसूत्रभाष्यसिद्धान्तव्याकोपः । एतेन ' कश्चिदेकदेशस्थ—' इत्यादिभाष्यमपिसंज्ञापरिभाषोभयसाधारणमिति वक्तुं शक्यम्, ' परिभाषारूपः ' इति कैयटस्तु उपलक्षणतया योज्यः । ' पारार्थ्यस्योभयसाधारणतया संकोचे मानाभावात्' इति यद्वाक्यार्थचन्द्रिकायामुक्तं तद्गलहस्तितम् । चकारेणानुकृष्यमाणस्यस्वरितत्वेनाधिक्रियमाणस्य च विध्येकवाक्यतयार्थबोधकत्वात्कश्चित्पदोपादेयस्यापि विध्येकवाक्यतयैवार्थबोधकत्वमिति परमवश्यमङ्गीकर्तव्यम्, तच्च परिभाषाशास्त्रेष्वेव सम्भवति, न तु संज्ञाशास्त्रेष्विति ' षष्ठीस्थान—' इति सूत्रस्थं भाष्यं परिभाषाशास्त्रमात्रविषयकमित्येव कल्पयितुमौचित्यात्, आस्तामिदमपि, ' मृजेर्वृद्धि' इत्यादिसूत्रस्थवृद्ध्यादिपदानामुपस्थापकतया चारिताथ्र्योऽपि उपस्थितपदार्थेऽन्वये प्र-

S Kuppuswami Sastrigal, M. A., Ag. Professor of Sanskrit & Comparative Philology, Presidency College, Madras — I have perused some portions of the work called *Nagesasaya Nirnaya* by Brahma-Sri R Narayanasastrial of the Tiruvadi Sanskrit College This work is a learned commentary on the famous treatise called Paribhashendusekhara by Nagesa Bhatta The author proposes to critically examine in this commentary the various interpretations given by other commentators on Paribhashendusekhara I see that this commentary has already met with the approbation of some eminent Vyakaranas like Mahamahopadhyaya Subbarayachariar From the portions I have seen, I can confidently say that Mr Sastriar's commentary, when published, will hold a prominent place in the dialectic literature relating to the Vyakarana Sastra Mr Sastriar's work in this direction deserves encouragement

---

# NEW PUBLICATIONS.



***Sastra Darpana*** by Sri Amalananda, the author of Kalpataru This is a masterly treatise on the Brahmasutras consisting of splendid lectures on each Adhikarana. Crown 8vo. pp. 369 Cloth Gilt. ***Rs. 2-8-0.***

***Taittiriyopanishad Bhashya*** with the commentary called **Vanamala** by Sri Achyuta Krishnananda Tirtha This precious commentary is quite invaluable to a right understanding of the Bhashya of Sri Sankara Royal 8vo. pp. 270. Price ***Rs. 3.***

***Bhagavad Gita*** with the commentary called **Brahmanandagiri** by Sri Venkatanatha An excellent Advaitic Commentary far superior in every respect to all others published hitherto The author seems to have been very learned with his critical faculties fully developed Crown 8vo. pp. 614. Price ***Rs. 3.***

THE MANAGER,

Bookselling Department,

SRI VANI VILAS PRESS,

SRIRANGAM, (Madras Presidency, S India)

# OPINIONS.

The Honorable Mr. V. Krishnaswamy Iyer. C. S I.— Brahma Sree R. Narayana Sastrial is a pundit of rare ability He has a profound knowledge of Vyakarana His powers of versification are high and his compositions are singularly free from the defects of modern pundits. His character is very good In my opinion he deserves the patronage of all lovers of Sanskrit

**तिरुविशनल्लूर् महामहोपाध्याय श्रीरामसुब्रह्मण्यशास्त्रिणः—**

भाष्ये पातञ्जले यन्मतिरतिविततता गेम्बरे ग्रन्थवर्ये
काव्यालङ्कारवर्गे बहुविधरचना यस्य सम्यक् प्रसिद्धा ।
द्राक्षापाको यदीये वचसि सुमधुरे नन्दनीयः कवीन्द्रः
सोऽय नारायणाख्यो मम मुदमतनोद्रामसुब्बोर्वचोभिः ॥

नागेशाशयनिर्णयसमाह्वयस्तेन निर्मितो ग्रन्थः ।
दृष्टोऽयमेक एव प्रभवति नागेशहृदयनिर्णीतौ ॥

**पञ्चनदक्षेत्रवास्तव्यवैयाकरणवर्य महामहोपाध्याय श्रीमुष्णसुब्बरायाचार्याः—** चोलमण्डलमण्डलायमानराधामङ्गलग्रामाभिजनेन सरसकविताचतुरेण वैयाकरणश्रेष्ठेन नारायणशास्त्रिणा प्रणीत नागेशाशयनिर्णयाभिधान परिभाषेन्दुशेखरव्याख्यानमवलोक्य एव मन्येऽहम् । यद्यपि पण्डितवर्यैः प्रणीतानि परिभाषेन्दुशेखरव्याख्यानानि सन्ति, तथापि अत्र उल्लिखिता अनेके नवीना विषया तेषु नोपलभ्यन्ते । किं च प्रायो व्याख्यानानि मूलखण्डनपराण्येव दृश्यन्ते । इद तु तत्खण्डनस्य अलग्नकता प्रदर्श्य मूलाशयवर्णनेन मूलार्थस्य दार्ढ्यं स्फोरयति । एवमादयो बहवो गुणा उपलभ्यन्ते । [illegible] ...यमुपादेयमिति ॥

**पुदुक्कोट्टै राजस्थानदानाधिकारिणः पुदग्रहारं श्रीगोपालशास्त्रिणः—**

नागेशाशयनिर्णयभूषितभूषणविराजितो जयति ।
खण्डितदोषकलापो भुवि परिभाषेन्दुशेखरो नाम ॥

मल्लिकटाचिरकाल गृहीतविद्यः कवीश्वरः प्रथते ।
नागेशाशयनिर्णयविधिना नारायणाभिधः शास्त्री ॥

मत्कृतभूषणविवरणनागेशाशयविनिर्णय वीक्ष्य ।
नानाखण्डनविवृतीर्जाता वेलेति निन्दितु मन्ये ॥

नवसालपुराधीशश्रीमन्मार्ताण्डभूपतेः ।
दानाधिकारी गोपालश्शास्त्रीत्थ बहुमन्यत ॥